ॐ श्रीपरमात्मने नमः

( महर्षिश्रीकृष्णद्वैपायनप्रणीतं )

# श्रीमन्महाभारतम्

## ( मूलमात्रम् )

[ आदिसभावनाख्यपर्वत्रयात्मकम् ]



तदिदं—

जालानोपाह्वेन घनश्यामदासेन 'गीताप्रेस' नाम्नि
मुद्रणालये मुद्रयित्वा प्रकाशितम्

# निवेदनम्

**यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।**
**ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥**

महामहिममहर्षिद्वैपायनप्रत्तोपायनमिवेदं तदीयप्रतिभाभारततं महाभारतं न केवलं महाभारतमेव वर्षमनुगृह्णाति स्वीयसुधावर्षेण नव्यभव्यगुणोत्कर्षेण च, प्रत्युत सकलां वसुमतीमेवासुमतीं विदधदान्वीक्षिक्यादिचतुर्दशविद्याविषयोपपादनमहिम्ना व्याप्नोतितरां नितराम्। ग्रन्थरत्नमिदमनिवार्यौदार्यप्रभृतिगुणगणगुम्फितार्यसंस्कृतिसमर्पणं दर्पणमिव दृक्संनिधिं नीयते। चतुर्वर्गप्राप्त्युपायप्रदर्शनं दर्शनमिव दरीदृश्यते। कृत्याकृत्यप्रवृत्तिनिवृत्त्यनुशासनपरं शास्त्रमिव च श्रद्धातिशयेन शोश्रूय्यते सुकृतिभिः। इह चातुर्वर्ण्यं वर्ण्यते चातुराश्रम्यं चाकर्ण्यते। इदं बहुविधविभावानुभावसंचारिभावैर्नवनवरसाभिव्यञ्जकतया सुधासहस्रगुणमाधुर्यातिरेकसम्भाव्यमभिनवं काव्यमिव चास्वाद्यते सततं सादरं सहृदयैः। इह स्त्रीशूद्रद्विजबन्धुविषयककृपापारवश्यं गतेन भगवता व्यासेन विहितं साङ्गवेदार्थोपबृंहणं सद्धर्मसमभ्यर्हणं गर्हणीयगर्हणं च पौनःपुन्येनाक्षिलक्ष्यीक्रियते। वेदार्थसारसंग्रहणादेव महाभारतं कार्ष्णवेदतया व्यपदिश्यते श्रुतावप्यस्य पञ्चमवेदताऽऽम्नायते। नरनारायणीयविजयानुवर्णनपरमिदं महाभारतं काव्यं सदपि न केवलं कविकल्पनाजल्पनारमणीयतामावहति, प्रत्युत यथार्थवृत्तप्रतिपादनपरं सर्वतोभावेन सत्यमितिवृत्तमिति नात्र मनागपि संशेतव्यम्। तथा चोपाक्रान्तमुपक्रमे जयो नामेतिहासोऽयमिति।

महोदधिमन्थनतश्चतुर्दशरत्नानि प्रादुरभूवन्निति जनश्रुतिः श्रुतिपदवीमुपायाता, परंतु महाभारतोदधेरालोडनतः पारेसंख्यमाविर्भवन्ति गुणरत्नानि नित्यनूतनानीति कोऽस्य महतो महत्त्वं प्रवक्तुं पारयेत। सप्तशतश्लोकरत्नविरविगीता श्रीमद्भगवद्गीता महाभारतस्यान्यतमं रत्नं संराजते, यदीयं गाम्भीर्यं महान्तमपारमकूपारमप्यतिशेते। अद्यावधि यानि यानि सहृदयहृदयाह्लादीन्यनवद्यपद्यमयानि काव्यानि रससिद्धिं प्रसिद्धिं चोपगतानि तानि तानि महाभारतमेवोपजीवन्ति स्वात्मलाभाय। महाभारतानुगृहीता एव विषया अन्यत्रोपवर्ण्यन्ते। ये नेह निबद्धास्ते न क्वचिदप्यन्यत्राप्युपलभ्यन्ते। तथा चोक्तं 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिदिति'। महाभारतेनैव धर्मविजयः सडिण्डिमघोषमुद्घोष्यते—'यतो धर्मस्ततो जय इति।' यः पार्थ इवापार्थपुरुषार्थाभिमानमुत्सृज्य सर्वात्मानं श्रीकृष्णं सर्वात्मनोपाश्रितः स्वीयजीवनरथरश्मींस्तदीयकराम्बुजयोः समर्पयेत् स एवेह निखिलानरातीन् पराजित्य विजयतेतमां तमेव चान्ते सच्चिद्घनरसमूर्तिं पुण्यमनोरथपूर्तिं मनोऽभिरामं श्यामसुन्दरं श्रीकृष्णं समुपैष्यतीति महाभारतस्य महानुपदेशः सर्वैरेव मनसि निधातव्यः।

संस्कृतवाङ्मयस्यानुपममद्वितीयं च ग्रन्थरत्नमिदं विषयगाम्भीर्येण विपुलकलेवरभरेण महतां भरतानां जन्मादिवृत्तान्तोपवर्णनेन च महाभारताख्यां समुपालभतेत्यादावेव पर्वणि निरुक्तम्। तदिदं सुरभारतीलीलानिकेतनकेतनमिव महाभारतं भारतीयसाहित्यसदनं समलंकरोति, समलंकृतमप्यन्तःकरणमध्येतॄणाममलंकरोतीति नापरोक्षं प्रेक्षावताम्। तदेवेदानीं चिरादागृह्वतां सतां सुहृदामनुरोधेनास्माभिर्महतो भारतस्य महत्त्वं वितन्वानं महाभारतं प्रकाशयितुं प्रयत्नः समारब्धः। भगवतोऽकारणकरुणावरुणालयस्य परमानुग्रहेण साम्प्रतमादिसभावनाख्याख्यापितपर्वत्रितयात्मकमिदं महाभारतस्य मूलमात्रं संस्करणं तत्रभवतां भवतामनुग्राहकाणां ग्राहकमहोदयानां करकमलेषु सानन्दं समुपह्रियते। हिंदीभाषयानूदितं समूलं संस्करणं यदिह प्रतिमासं प्रकाश्यते तत एव मूलमात्रं निष्कृष्य पृथक् प्रख्यातिं नीयते। अन्यान्यपर्वाण्यप्येवमेव पर्यायेण प्रकाशभावमुपनीय महाभारतरसिकेभ्यः समुपहर्तुं प्रयतिष्यते।

अथेदानीं पाठभेदप्राचुर्यं प्रति ध्यानमाकृष्यते सुधियाम्। दाक्षिणात्योदीच्यमहाभारतपुस्तकेषु पाठास्तु बहुधा बेभिद्यन्त एव; प्रायेण पञ्चदशसहस्राणां श्लोकानां न्यूनाधिक्यं चाप्यवलोक्यते। अस्माभिस्तूदीच्यपुस्तकानां तत्रापि नीलकण्ठनिर्मितभावदीपदीपितानामेव पाठो यद्यपि मुख्यतयाङ्गीकृतस्तथापि क्वचित्क्वचिदुपयोगीनि पाठान्तराण्यप्यङ्गीकृत्य

पाठसंशोधनं व्यधायि । दाक्षिणात्यपुस्तकेषूपलभ्यमानानामतिरिक्तश्लोकानामप्युपयोगिनो भागा ग्रन्थेऽस्मिन् यथास्थानं ( ) कोष्ठकबद्धाः संनिवेशिता अनूदिताश्चान्यस्मिन् संस्करणे—इति वेदनीयं विद्वद्भिः । प्रतिपर्वगतोदीच्यदाक्षिणात्यसमष्टिश्लोकसंख्याधोनिर्दिष्टरीत्या ज्ञातव्या—

# प्रतिपर्वगतसमष्टिश्लोकसंख्यासूचिका

| | अनुष्टुप्छन्दसां श्लोकसंख्या | अन्येषां बृहतां छन्दसां श्लोकसंख्या | बृहतां छन्दसामक्षराणि द्वात्रिंशदक्षरात्मकानुष्टुभा विभज्य परिगणितानां श्लोकानां संख्या | गद्याक्षराणि चानुष्टुभा विभज्य परिगणितानां श्लोकसंख्या | सर्वेषां योगाः |
|---|---|---|---|---|---|
| आदिपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | ७८७०½ | (५११½) | ७३६½ | २८३ | ८८९० |
| आदिपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | ७१०½ | (१८½) | २६ | × | ७३६½ |

आदिपर्वणि सम्पूर्णाः श्लोकाः ९६२६½

| | अनुष्टुप्छन्दसां श्लोकसंख्या | अन्येषां बृहतां छन्दसां श्लोकसंख्या | बृहतां छन्दसामक्षराणि द्वात्रिंशदक्षरात्मकानुष्टुभा विभज्य परिगणितानां श्लोकानां संख्या | सर्वेषां योगाः |
|---|---|---|---|---|
| सभापर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | २५९५½ | (१५७) | २१७।।= | २८१३= |
| सभापर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | १२४२ | (१) | १।= | १२४३।= |

सभापर्वणि सम्पूर्णाः श्लोकाः ४०५६½

| | अनुष्टुप्छन्दसां श्लोकसंख्या | अन्येषां बृहतां छन्दसां श्लोकसंख्या | बृहतां छन्दसामक्षराणि द्वात्रिंशदक्षरात्मकानुष्टुभा विभज्य परिगणितानां श्लोकानां संख्या | गद्याक्षराणि चानुष्टुभा विभज्य परिगणितानां श्लोकानां संख्या | सर्वेषां योगाः |
|---|---|---|---|---|---|
| वनपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | १०९३७ | (७८५) | १०८०।= | १७१।। | १२१८८।।।= |
| वनपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | ८२ | (४) | ५।। | × | ८७।। |

वनपर्वणि सम्पूर्णाः श्लोकाः १२२७६।=

संस्करणेऽस्मिन्नशुद्धिनिरासाय नितरामवधाने दत्तेऽपि चेतश्चाञ्चल्यात् प्रमादादल्पप्रज्ञत्वाच्चाधुनाऽप्यशुद्धयोऽवशिष्टा भवेयुरिति सम्भाव्यते । तदर्थं चात्यर्थक्षमाभ्यर्थनपुरःसरं विद्वांसोऽनुरोध्यन्ते तत्सूचनाप्रदानानुग्रहाय, यतोऽनन्तरभाविनि संस्करणे तासामपि निरासार्थं प्रयासो विधीयेतेति शुभम् ।

—प्रकाशकस्य

ॐ श्रीपरमात्मने नमः

# श्रीमहाभारतस्थविषयाणामनुक्रमः

## ( अनुद्यूतपर्वणि )



# वनपर्वणि

## ( अरण्यपर्वणि )

### ( जटासुरवधपर्वणि )



### ( यक्षयुद्धपर्वणि )



### ( निवातकवचयुद्धपर्वणि )

## ( चित्र-सूची )

श्रीहरिः

श्रीगणेशाय नमः

श्रीवेदव्यासाय नमः

# श्रीमहाभारतम्

## आदिपर्व

### ( अनुक्रमणिकापर्व )

### प्रथमोऽध्यायः

**महाभारतग्रन्थस्योपक्रमः, ग्रन्थोक्तविषयाणां दिग्दर्शनम्, ग्रन्थपाठमाहात्म्यं च**

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

ॐ नमो भगवते वासुदेवाय । ॐ नमः पितामहाय । ॐ नमः प्रजापतिभ्यः । ॐ नमः कृष्णद्वैपायनाय । ॐ नमः सर्वविघ्नविनायकेभ्यः ।

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको
नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ॥ १ ॥
सुखासीनानभ्यगच्छद् ब्रह्मर्षीन् संशितव्रतान् ।
विनयावनतो भूत्वा कदाचित् सूतनन्दनः ॥ २ ॥
तमाश्रममनुप्राप्तं नैमिषारण्यवासिनाम् ।
चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ॥ ३ ॥
अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलिः ।
अपृच्छत् स तपोवृद्धिं सद्भिश्चैवाभिपूजितः ॥ ४ ॥
अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु ।
निर्दिष्टमासनं भेजे विनयाल्लौमहर्षणिः ॥ ५ ॥
सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य च ।
अथापृच्छदृषिस्तत्र कश्चित् प्रस्तावयन् कथाः ॥ ६ ॥
कुत आगम्यते सौते क्व चायं विहृतस्त्वया ।
कालः कमलपत्राक्ष शंसैतत् पृच्छतो मम ॥ ७ ॥
एवं पृष्टोऽब्रवीत् सम्यग् यथावल्लौमहर्षणिः ।
वाक्यं वचनसम्पन्नस्तेषां च चरिताश्रयम् ॥ ८ ॥
तस्मिन् सदसि विस्तीर्णे मुनीनां भावितात्मनाम् ।

*सौतिरुवाच*

जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ॥ ९ ॥
समीपे पार्थिवेन्द्रस्य सम्यक् पारिक्षितस्य च ।
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः ॥ १० ॥
कथिताश्चापि विधिवद् या वैशम्पायनेन वै ।
श्रुत्वाहं ता विचित्रार्था महाभारतसंश्रिताः ॥ ११ ॥
बहूनि सम्परिक्रम्य तीर्थान्यायतनानि च ।
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम् ॥ १२ ॥
गतवानस्मि तं देशं युद्धं यत्राभवत् पुरा ।
कुरूणां पाण्डवानां च सर्वेषां च महीक्षिताम् ॥ १३ ॥
दिदृक्षुरागतस्तस्मात् समीपं भवतामिह ।
आयुष्मन्तः सर्व एव ब्रह्मभूता हि मे मताः ।
अस्मिन् यज्ञे महाभागाः सूर्यपावकवर्चसः ॥ १४ ॥
कृताभिषेकाः शुचयः कृतजप्या हुताग्नयः ।
भवन्त आसने स्वस्था ब्रवीमि किमहं द्विजाः ॥ १५ ॥
पुराणसंहिताः पुण्याः कथा धर्मार्थसंश्रिताः ।
इति वृत्तं नरेन्द्राणामृषीणां च महात्मनाम् ॥ १६ ॥

*ऋषय ऊचुः*

द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा ।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् ॥ १७ ॥
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ १८ ॥
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् ॥ १९ ॥
जनमेजयस्य यां राज्ञो वैशम्पायन उक्तवान् ।
यथावत् स ऋषिस्तुष्ट्या सत्रे द्वैपायनाज्ञया ॥ २० ॥
वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्मणः ।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् ॥ २१ ॥

*सौतिरुवाच*

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ २२ ॥

असच्च सदसच्चैव यद् विश्वं सदसत्परम्।
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ २३ ॥
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम्।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ २४ ॥
महर्षेः पूजितस्येह सर्वलोकैर्महात्मनः।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥ २५ ॥
आचख्युः कवयः केचित् सम्प्रत्याचक्षते परे।
आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवि ॥ २६ ॥
इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम्।
विस्तरैश्च समासैश्च धार्यते यद् द्विजातिभिः ॥ २७ ॥
अलंकृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः।
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् ॥ २८ ॥
(पुण्ये हिमवतः पादे मध्ये गिरिगुहालये।
विशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः ॥
शुचिः सनियमो व्यासः शान्तात्मा तपसि स्थितः।
भारतस्येतिहासस्य धर्मेणान्वीक्ष्य तां गतिम् ॥
प्रविश्य योगं ज्ञानेन सोऽपश्यत् सर्वमन्ततः।)
निष्प्रभेऽस्मिन् निरालोके सर्वतस्तमसावृते।
बृहदण्डमभूदेकं प्रजानां बीजमव्ययम् ॥ २९ ॥
युगस्यादौ निमित्तं तन्महद्दिव्यं प्रचक्षते।
यस्मिन् संश्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ॥ ३० ॥
अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां गतम्।
अव्यक्तं कारणं सूक्ष्मं यत् तत् सदसदात्मकम् ॥ ३१ ॥
यस्मात् पितामहो जज्ञे प्रभुरेकः प्रजापतिः।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ॥ ३२ ॥
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त वै।
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ॥ ३३ ॥
पुरुषश्चाप्रमेयात्मा यं सर्व ऋषयो विदुः।
विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि ॥ ३४ ॥
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा।
ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः ॥ ३५ ॥
राजर्षयश्च बहवः सर्वे समुदिता गुणैः।
आपो द्यौः पृथिवी वायुरन्तरिक्षं दिशस्तथा ॥ ३६ ॥
संवत्सरर्तवो मासाः पक्षाहोरात्रयः क्रमात्।
यच्चान्यदपि तत् सर्वं सम्भूतं लोकसाक्षिकम् ॥ ३७ ॥
यदिदं दृश्यते किंचिद् भूतं स्थावरजङ्गमम्।
पुनः संक्षिप्यते सर्वं जगत् प्राप्ते युगक्षये ॥ ३८ ॥
यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ३९ ॥
एवमेतदनाद्यन्तं भूतसंहारकारकम्।
अनादिनिधनं लोके चक्रं सम्परिवर्तते ॥ ४० ॥
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च।
त्रयस्त्रिंशच्च देवानां सृष्टिः संक्षेपलक्षणा ॥ ४१ ॥
दिवःपुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः।
सविता स ऋचीकोऽर्को भानुराशावहो रविः ॥ ४२ ॥
पुरा विवस्वतः सर्वे मह्यस्तेषां तथावरः।
देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः ॥ ४३ ॥
सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः।
दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च ॥ ४४ ॥
दशपुत्रसहस्राणि दशज्योतेर्महात्मनः।
ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः ॥ ४५ ॥
भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः।
तेभ्योऽयं कुरुवंशश्च यदूनां भरतस्य च ॥ ४६ ॥
ययातीक्ष्वाकुवंशश्च राजर्षीणां च सर्वशः।
सम्भूता बहवो वंशा भूतसर्गाः सुविस्तराः ॥ ४७ ॥
भूतस्थानानि सर्वाणि रहस्यं त्रिविधं च यत्।
वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ॥ ४८ ॥
धर्मकामार्थयुक्तानि शास्त्राणि विविधानि च।
लोकयात्राविधानं च सर्वं तद् दृष्टवानृषिः ॥ ४९ ॥
इतिहासाः सवैयाख्या विविधाः श्रुतयोऽपि च।
इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम् ॥ ५० ॥
विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥ ५१ ॥
मन्वादि भारतं केचिदास्तीकादि तथा परे।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ॥ ५२ ॥
विविधं संहिताज्ञानं दीपयन्ति मनीषिणः।
व्याख्यातुं कुशलाः केचिद् ग्रन्थान् धारयितुं परे ॥५३॥
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ५४ ॥
पराशरात्मजो विद्वान् ब्रह्मर्षिः संशितव्रतः।
तदाख्यानवरिष्ठं स कृत्वा द्वैपायनः प्रभुः ॥ ५५ ॥
कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत्।
तस्य तच्चिन्तितं ज्ञात्वा ऋषेर्द्वैपायनस्य च ॥ ५६ ॥
तत्राजगाम भगवान् ब्रह्मा लोकगुरुः स्वयम्।
प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया ॥ ५७ ॥
तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः।
आसनं कल्पयामास सर्वैर्मुनिगणैर्वृतः ॥ ५८ ॥
हिरण्यगर्भमासीनं तस्मिंस्तु परमासने।
परिवृत्यासनाभ्याशे वासवेयः स्थितोऽभवत् ॥ ५९ ॥
अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना।
निषसादासनाभ्याशे प्रीयमाणः शुचिस्मितः ॥ ६० ॥
उवाच स महातेजा ब्रह्माणं परमेष्ठिनम्।
कृतं मयेदं भगवन् काव्यं परमपूजितम् ॥ ६१ ॥
ब्रह्मन् वेदरहस्यं च यच्चान्यत् स्थापितं मया।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥ ६२ ॥

इतिहासपुराणानामुन्मेषं निर्मितं च यत् ।
भूतं भव्यं भविष्यं च त्रिविधं कालसंज्ञितम् ॥ ६३ ॥
जरामृत्युभयव्याधिभावाभावविनिश्चयः ।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ॥ ६४ ॥
चातुर्वर्ण्यविधानं च पुराणानां च कृत्स्नशः ।
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ॥ ६५ ॥
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ॥ ६६ ॥
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा ।
हेतुनैव समं जन्म दिव्यमानुषसंज्ञितम् ॥ ६७ ॥
तीर्थानां चैव पुण्यानां देशानां चैव कीर्तनम् ।
नदीनां पर्वतानां च वनानां सागरस्य च ॥ ६८ ॥
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।
वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥ ६९ ॥
यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम् ।
परं न लेखकः कश्चिदेतस्य भुवि विद्यते ॥ ७० ॥

*ब्रह्मोवाच*

तपोविशिष्टादपि वै विशिष्टान्मुनिसंचयात् ।
मन्ये श्रेष्ठतरं त्वां वै रहस्यज्ञानवेदनात् ॥ ७१ ॥
जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।
त्वया च काव्यमित्युक्तं तस्मात् काव्यं भविष्यति॥७२॥
अस्य काव्यस्य कवयो न समर्था विशेषणे ।
विशेषेण गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ ७३॥
काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने ।

*सौतिरुवाच*

एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ॥ ७४ ॥
ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः ।
स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः ॥ ७५ ॥
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः ।
पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ ॥ ७६ ॥
लेखको भारतस्यास्य भव त्वं गणनायक ।
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ॥ ७७ ॥
श्रुत्वैतत् प्राह विघ्नेशो यदि मे लेखनी क्षणम् ।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् ॥ ७८ ॥
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख क्वचित् ।
ओमित्युक्त्वा गणेशोऽपि बभूव किल लेखकः ॥ ७९ ॥
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् ।
यस्मिन् प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदम् ॥ ८० ॥
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा ॥ ८१ ॥
तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने ।
भेत्तुं न शक्यतेऽर्थस्य गूढत्वात् प्रश्रितस्य च ॥ ८२ ॥
सर्वज्ञोऽपि गणेशो यत् क्षणमास्ते विचारयन् ।
तावच्चकार व्यासोऽपि श्लोकानन्यान् बहूनपि ॥ ८३ ॥
अज्ञानतिमिरान्धस्य लोकस्य तु विचेष्टतः ।
ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकम् ॥ ८४ ॥
धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
तथा भारतसूर्येण नृणां विनिहतं तमः ॥ ८५ ॥
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः ।
नृबुद्धिकैरवाणां च कृतमेतत् प्रकाशनम् ॥ ८६ ॥
इतिहासप्रदीपेन मोहावरणघातिना ।
लोकगर्भगृहं कृत्स्नं यथावत् सम्प्रकाशितम् ॥ ८७ ॥
संग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् ।
सम्भवस्कन्धविस्तारः सभारण्यविटङ्कवान् ॥ ८८ ॥
अरणीपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् ॥ ८९ ॥
कर्णपर्वसितैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥ ९० ॥
अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः ।
मौसलः श्रुतिसंक्षेपः शिष्टद्विजनिषेवितः ॥ ९१ ॥
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ॥ ९२ ॥

*सौतिरुवाच*

तस्य वृक्षस्य वक्ष्यामि शश्वत्पुष्पफलोदयम् ।
स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ॥ ९३ ॥
मातुर्नियोगाद् धर्मात्मा गाङ्गेयस्य च धीमतः ।
क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा ॥ ९४ ॥
त्रीनग्नीनिव कौरव्यान् जनयामास वीर्यवान् ।
उत्पाद्य धृतराष्ट्रं च पाण्डुं विदुरमेव च ॥ ९५ ॥
जगाम तपसे धीमान् पुनरेवाश्रमं प्रति ।
तेषु जातेषु वृद्धेषु गतेषु परमां गतिम् ॥ ९६ ॥
अब्रवीद् भारतं लोके मानुषेऽस्मिन् महानृषिः ।
जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः ॥ ९७ ॥
शशास शिष्यमासीनं वैशम्पायनमन्तिके ।
स सदस्यैः सहासीनः श्रावयामास भारतम् ॥ ९८ ॥
कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनः पुनः ।
विस्तरं कुरुवंशस्य गान्धार्या धर्मशीलताम् ॥ ९९ ॥
क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग् द्वैपायनोऽब्रवीत् ।
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् ॥ १०० ॥
दुर्वृत्तं धार्तराष्ट्राणामुक्तवान् भगवानृषिः ।
इदं शतसहस्रं तु लोकानां पुण्यकर्मणाम् ॥ १०१ ॥
उपाख्यानैः सह ज्ञेयमाद्यं भारतमुत्तमम् ।
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ॥ १०२ ॥
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः ।
ततोऽप्यर्धशतं भूयः संक्षेपं कृतवानृषिः ॥ १०३ ॥

अनुक्रमणिकाध्यायं वृत्तान्तं सर्वपर्वणाम् ।
इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम् ॥१०४॥
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः ।
षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ॥१०५॥
त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम् ।
पित्र्ये पञ्चदश प्रोक्तं गन्धर्वेषु चतुर्दश ॥१०६॥
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम् ।
नारदोऽश्रावयद् देवानसितो देवलः पितॄन् ॥१०७॥
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ।
अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् ॥१०८॥
शिष्यो व्यासस्य धर्मात्मा सर्ववेदविदां वरः ।
एकं शतसहस्रं तु मयोक्तं वै निबोधत ॥१०९॥
दुर्योधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥११०॥
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥१११॥
पाण्डुर्जित्वा बहून् देशान् बुद्ध्या विक्रमणेन च ।
अरण्ये मृगयाशीलो न्यवसन्मुनिभिः सह ॥११२॥
मृगव्यवायनिधनात् कृच्छ्रां प्राप स आपदम् ।
जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ॥११३॥
मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति ।
धर्मस्य वायोः शक्रस्य देवयोश्च तथाश्विनोः ॥११४॥
( ततो धर्मोपनिषदः श्रुत्वा भर्तुः प्रिया पृथा ।
धर्मानिलेन्द्रान् स्तुतिभिर्जुहाव सुतवाञ्छया ।
तद्दत्तोपनिषन्माद्री चाश्विनावाजुहाव च ।)
तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः ।
मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ॥११५॥
ऋषिभिर्यत्तदाऽऽनीता धार्तराष्ट्रान् प्रति स्वयम् ।
शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ॥११६॥
पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः ।
पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ॥११७॥
तांस्तैर्निवेदितान् दृष्ट्वा पाण्डवान् कौरवास्तदा ।
शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम् ॥११८॥
आहुः केचिन्न तस्यैते तस्यैत इति चापरे ।
यदा चिरमृतः पाण्डुः कथं तस्येति चापरे ॥११९॥
स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम संततिम् ।
उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ॥१२०॥
तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन् ।
अन्तर्हितानां भूतानां निःस्वनस्तुमुलोऽभवत् ॥१२१॥
पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिःस्वनाः ।
आसन् प्रवेशे पार्थानां तदद्भुतमिवाभवत् ॥१२२॥
तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसम्भवः ।
शब्द आसीन्महांस्तत्र दिवःस्पृक्कीर्तिवर्धनः ॥१२३॥
तेऽधीत्य निखिलान् वेदाञ्छास्त्राणि विविधानि च ।
न्यवसन् पाण्डवास्तत्र पूजिता अकुतोभयाः ॥१२४॥
युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन् ।
धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ॥१२५॥
गुरुशुश्रूषया क्षान्त्या यमयोर्विनयेन च ।
तुतोष लोकः सकलस्तेषां शौर्यगुणेन च ॥१२६॥
समवाये ततो राज्ञां कन्यां भर्तृस्वयंवराम् ।
प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म सुदुष्करम् ॥१२७॥
ततः प्रभृति लोकेऽस्मिन् पूज्यः सर्वधनुष्मताम् ।
आदित्य इव दुष्प्रेक्ष्यः समरेष्वपि चाभवत् ॥१२८॥
स सर्वान् पार्थिवाञ्जित्वा सर्वांश्च महतो गणान् ।
आजहारार्जुनो राज्ञो राजसूयं महाक्रतुम् ॥१२९॥
अन्नवान् दक्षिणावांश्च सर्वैः समुदितो गुणैः ।
युधिष्ठिरेण सम्प्राप्तो राजसूयो महाक्रतुः ॥१३०॥
सुनयाद् वासुदेवस्य भीमार्जुनबलेन च ।
घातयित्वा जरासन्धं चैद्यं च बलगर्वितम् ॥१३१॥
दुर्योधनं समागच्छन्नर्हणानि ततस्ततः ।
मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च ॥१३२॥
विचित्राणि च वासांसि प्रावारावरणानि च ।
कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ॥१३३॥
समृद्धां तां तथा दृष्ट्वा पाण्डवानां तदा श्रियम् ।
ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ॥१३४॥
विमानप्रतिमां तत्र मयेन सुकृतां सभाम् ।
पाण्डवानामुपहृतां स दृष्ट्वा पर्यतप्यत ॥१३५॥
तत्रावहसितश्चासीत् प्रस्कन्दन्निव सम्भ्रमात् ।
प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ॥१३६॥
स भोगान् विविधान् भुञ्जन् रत्नानि विविधानि च ।
कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः ॥१३७॥
अन्वजानात् ततो द्यूतं धृतराष्ट्रः सुतप्रियः ।
तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् ॥१३८॥
नातिप्रीतमनाश्चासीद् विवादांश्चान्वमोदत ।
द्यूतादीननयान् घोरान् विविधांश्चाप्युपैक्षत ॥१३९॥
निरस्य विदुरं भीष्मं द्रोणं शारद्वतं कृपम् ।
विग्रहे तुमुले तस्मिन् दहत् क्षत्रं परस्परम् ॥१४०॥
जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियम् ।
दुर्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तथा ॥१४१॥
धृतराष्ट्रश्चिरं ध्यात्वा संजयं वाक्यमब्रवीत् ।
शृणु संजय सर्वं मे न चासूयितुमर्हसि ॥१४२॥

श्रुतवानसि मेधावी बुद्धिमान् प्राज्ञसम्मतः ।
न विग्रहे मम मतिर्न च प्रीये कुलक्षये ॥१४३॥
न मे विशेषः पुत्रेषु स्वेषु पाण्डुसुतेषु वा ।
वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः ॥१४४॥
अहं त्वचक्षुः कार्पण्यात् पुत्रप्रीत्या सहामि तत् ।
मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् ॥१४५॥
राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः ।
तच्चावहसनं प्राप्य सभारोहणदर्शने ॥१४६॥
अमर्षणः स्वयं जेतुमशक्तः पाण्डवान् रणे ।
निरुत्साहश्च सम्प्राप्तुं सुश्रियं क्षत्रियोऽपि सन् ॥१४७॥
गान्धारराजसहितश्छद्मद्यूतममन्त्रयत् ।
तत्र यद् यद् यथा ज्ञातं मया संजय तच्छृणु ॥१४८॥
श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि तत्त्वतः ।
ततो ज्ञास्यसि मां सौते प्रज्ञाचक्षुषमित्युत ॥१४९॥

यदाश्रौषं धनुरायम्य चित्रं
विद्धं लक्ष्यं पातितं वै पृथिव्याम् ।
कृष्णां हृतां प्रेक्षतां सर्वराज्ञां
तदा नाशंसे विजयाय संजय ॥१५०॥

यदाश्रौषं द्वारकायां सुभद्रां
प्रसह्योढां माधवीमर्जुनेन ।
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ
तदा नाशंसे विजयाय संजय ॥१५१॥

यदाश्रौषं देवराजं प्रविष्टं
शरैर्दिव्यैर्वारितं चार्जुनेन ।
अग्निं तथा तर्पितं खाण्डवे च
तदा नाशंसे विजयाय संजय ॥१५२॥

यदाश्रौषं जातुषाद् वेश्मनस्तान्
मुक्तान् पार्थान् पञ्च कुन्त्या समेतान् ।
युक्तं चैषां विदुरं स्वार्थसिद्धौ
तदा नाशंसे विजयाय संजय ॥१५३॥

यदाश्रौषं द्रौपदीं रङ्गमध्ये
लक्ष्यं भित्त्वा निर्जितामर्जुनेन ।
शूरान् पञ्चालान् पाण्डवेयांश्च युक्तां-
स्तदा नाशंसे विजयाय संजय ॥१५४॥

यदाश्रौषं मागधानां वरिष्ठं
जरासन्धं क्षत्रमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
तदा नाशंसे विजयाय संजय ॥१५५॥

यदाश्रौषं दिग्विजये पाण्डुपुत्रै-
र्वशीकृतान् भूमिपालान् प्रसह्य ।
महाक्रतुं राजसूयं कृतं च
तदा नाशंसे विजयाय संजय ॥१५६॥

यदाश्रौषं द्रौपदीमश्रुकण्ठीं
सभां नीतां दुःखितामेकवस्त्राम् ।
रजस्वलां नाथवतीमनाथवत्
तदा नाशंसे विजयाय संजय ॥१५७॥

यदाश्रौषं वाससां तत्र राशिं
समाक्षिपत् कितवो मन्दबुद्धिः ।
दुःशासनो गतवान् नैव चान्तं
तदा नाशंसे विजयाय संजय ॥१५८॥

यदाश्रौषं हृतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् ।
अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय संजय ॥१५९॥

यदाश्रौषं विविधास्तत्र चेष्टा
धर्मात्मनां प्रस्थितानां वनाय ।
ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां
तदा नाशंसे विजयाय संजय ॥१६०॥

यदाश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय संजय ॥१६१॥

यदाश्रौषमर्जुनं देवदेवं
किरातरूपं त्र्यम्बकं तोष्य युद्धे ।
अवाप्तवन्तं पाशुपतं महास्त्रं
तदा नाशंसे विजयाय संजय ॥१६२॥

( यदाश्रौषं वनवासे तु पार्थान्
समागतान् महर्षिभिः पुराणैः ।
उपास्यमानान् सगणैर्जातसख्यान्
तदा नाशंसे विजयाय संजय ॥ )

यदाश्रौषं त्रिदिवस्थं धनंजयं
शक्रात् साक्षाद् दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं
तदा नाशंसे विजयाय संजय ॥१६३॥

यदाश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
देवैरजेया निर्जिताश्चार्जुनेन
तदा नाशंसे विजयाय संजय ॥१६४॥

यदाश्रौषमसुराणां वधार्थे
किरीटिनं यातममित्रकर्शनम् ।
कृतार्थं चाप्यागतं शक्रलोकात्
तदा नाशंसे विजयाय संजय ॥१६५॥

( यदाश्रौषं तीर्थयात्राप्रवृत्तं
पाण्डोः सुतं सहितं लोमशेन ।

तस्मादश्रौषीदर्जुनस्यार्थलाभं
तदा नाशंसे विजयाय संजय ॥ )
यदाश्रौषं वैश्रवणेन सार्धं
समागतं भीममन्यांश्च पार्थान् ।
तस्मिन् देशे मानुषाणामगम्ये
तदा नाशंसे विजयाय संजय ॥१६६॥
यदाश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय संजय ॥१६७॥
यदाश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत ।
प्रश्नान् कांश्चिद् विब्रुवाणं च सम्यक्
तदा नाशंसे विजयाय संजय ॥१६८॥
यदाश्रौषं न विदुर्मामकास्तान्
प्रच्छन्नरूपान् वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया च
तदा नाशंसे विजयाय संजय ॥१६९॥
( यदाश्रौषं कीचकानां वरिष्ठं
निषूदितं भ्रातृशतेन सार्धम् ।
द्रौपद्यर्थं भीमसेनेन संख्ये
तदा नाशंसे विजयाय संजय ॥ )
यदाश्रौषं मामकानां वरिष्ठान्
धनंजयेनैकरथेन भग्नान् ।
विराटराष्ट्रे वसता महात्मना
तदा नाशंसे विजयाय संजय ॥१७०॥
यदाश्रौषं सत्कृतां मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय ।
तां चार्जुनः प्रत्यगृह्णात् सुतार्थे
तदा नाशंसे विजयाय संजय ॥१७१॥
यदाश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य स्वजनात् प्रच्युतस्य ।
अक्षौहिणीः सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय संजय ॥१७२॥
यदाश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम् ।
यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय संजय ॥१७३॥
यदाश्रौषं नरनारायणौ तौ
कृष्णार्जुनौ वदतो नारदस्य ।
अहं द्रष्टा ब्रह्मलोके च सम्यक्
तदा नाशंसे विजयाय संजय ॥१७४॥
यदाश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम् ।
शमं कुर्वाणमकृतार्थं च यातं
तदा नाशंसे विजयाय संजय ॥१७५॥
यदाश्रौषं कर्णदुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय संजय ॥१७६॥
यदाश्रौषं वासुदेवे प्रयाते
रथस्यैकामग्रतस्तिष्ठमानाम् ।
आर्तां पृथां सान्त्वितां केशवेन
तदा नाशंसे विजयाय संजय ॥१७७॥
यदाश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शांतनवं च तेषाम् ।
भारद्वाजं चाशिषोऽनुब्रुवाणं
तदा नाशंसे विजयाय संजय ॥१७८॥
यदाश्रौषं कर्ण उवाच भीष्मं
नाहं योत्स्ये युध्यमाने त्वयीति ।
हित्वा सेनामपचक्राम चापि
तदा नाशंसे विजयाय संजय ॥१७९॥
यदाश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् ।
त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय संजय ॥१८०॥
यदाश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान् दर्शयानं शरीरे
तदा नाशंसे विजयाय संजय ॥१८१॥
यदाश्रौषं भीष्मममित्रकर्शनं
निघ्नन्तमाजावयुतं रथानाम् ।
नैषां कश्चिद् वध्यते ख्यातरूप-
स्तदा नाशंसे विजयाय संजय ॥१८२॥
यदाश्रौषं चापगेयेन संख्ये
स्वयं मृत्युं विहितं धार्मिकेण ।
तच्चाकार्षुः पाण्डवेयाः प्रहृष्टा-
स्तदा नाशंसे विजयाय संजय ॥१८३॥
यदाश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतः स्थापयित्वा
तदा नाशंसे विजयाय संजय ॥१८४॥
यदाश्रौषं शरतल्पे शयानं
वृद्धं वीरं सादितं चित्रपुङ्खैः ।

भीष्मं कृत्वा सोमकानल्पशेषां-
स्तदा नाशंसे विजयाय संजय ॥१८५॥
यदाश्रौषं शांतनवे शयाने
पानीयार्थे चोदितेनार्जुनेन ।
भूमिं भित्त्वा तर्पितं तत्र भीष्मं
तदा नाशंसे विजयाय संजय ॥१८६॥
यदा वायुश्चन्द्रसूर्यौ च युक्तौ
कौन्तेयानामनुलोमा जयाय ।
नित्यं चास्माञ्श्वापदा भीषयन्ति
तदा नाशंसे विजयाय संजय ॥१८७॥
यदा द्रोणो विविधानस्त्रमार्गान्
निदर्शयन् समरे चित्रयोधी ।
न पाण्डवाञ्श्रेष्ठतरान् निहन्ति
तदा नाशंसे विजयाय संजय ॥१८८॥
यदाश्रौषं चास्मदीयान् महारथान्
व्यवस्थितानर्जुनस्यान्तकाय ।
संशप्तकान् निहतानर्जुनेन
तदा नाशंसे विजयाय संजय ॥१८९॥
यदाश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय संजय ॥१९०॥
यदाभिमन्युं परिवार्य बालं
सर्वे हत्वा हृष्टरूपा बभूवुः ।
महारथाः पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय संजय ॥१९१॥
यदाश्रौषमभिमन्युं निहत्य
हर्षान्मूढान् क्रोशतो धार्तराष्ट्रान् ।
क्रोधादुक्तं सैन्धवे चार्जुनेन
तदा नाशंसे विजयाय संजय ॥१९२॥
यदाश्रौषं सैन्धवार्थे प्रतिज्ञां
प्रतिज्ञातां तद्वधायार्जुनेन ।
सत्यां तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय संजय ॥१९३॥
यदाश्रौषं श्रान्तहये धनंजये
मुक्त्वा हयान् पाययित्वोपवृत्तान् ।
पुनर्युक्त्वा वासुदेवं प्रयातं
तदा नाशंसे विजयाय संजय ॥१९४॥
यदाश्रौषं वाहनेष्वक्षमेषु
रथोपस्थे तिष्ठता पाण्डवेन ।
सर्वान् योधान् वारितानर्जुनेन
तदा नाशंसे विजयाय संजय ॥१९५॥

यदाश्रौषं नागबलैः सुदुःसहं
द्रोणानीकं युयुधानं प्रमथ्य ।
यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ
तदा नाशंसे विजयाय संजय ॥१९६॥
यदाश्रौषं कर्णमासाद्य मुक्तं
वधाद् भीमं कुत्सयित्वा वचोभिः ।
धनुष्कोट्याऽऽतुद्य कर्णेन वीरं
तदा नाशंसे विजयाय संजय ॥१९७॥
यदा द्रोणः कृतवर्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च शूरः ।
अमर्षयन् सैन्धवं वध्यमानं
तदा नाशंसे विजयाय संजय ॥१९८॥
यदाश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय संजय ॥१९९॥
यदाश्रौषं कर्णघटोत्कचाभ्यां
युद्धे मुक्तां सूतपुत्रेण शक्तिम् ।
यया वध्यः समरे सव्यसाची
तदा नाशंसे विजयाय संजय ॥२००॥
यदाश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय संजय ॥२०१॥
यदाश्रौषं द्रौणिना द्वैरथस्थं
माद्रीसुतं नकुलं लोकमध्ये ।
समं युद्धे मण्डलेभ्यश्चरन्तं
तदा नाशंसे विजयाय संजय ॥२०२॥
यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान् पाण्डवानां
तदा नाशंसे विजयाय संजय ॥२०३॥
यदाश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय संजय ॥२०४॥
यदाश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन् भ्रातॄणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय संजय ॥२०५॥
यदाश्रौषं द्रोणपुत्रं च शूरं
दुःशासनं कृतवर्माणमुग्रम् ।

युधिष्ठिरं धर्मराजं जयन्तं
तदा नाशंसे विजयाय संजय ॥२०६॥
यदाश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत ।
सदा संग्रामे स्पर्धते यस्तु कृष्णं
तदा नाशंसे विजयाय संजय ॥२०७॥
यदाश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं संग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय संजय ॥२०८॥
यदाश्रौषं श्रान्तमेकं शयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नशक्तिं
तदा नाशंसे विजयाय संजय ॥२०९॥
यदाश्रौषं पाण्डवांस्तिष्ठमानान्
गत्वा ह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय संजय ॥२१०॥
यदाश्रौषं विविधांश्चित्रमार्गान्
गदायुद्धे मण्डलशश्चरन्तम् ।
मिथ्याहतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय संजय ॥२११॥
यदाश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान् पञ्चालान् द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय संजय ॥२१२॥
यदाश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषीकमवधीद् येन गर्भं
तदा नाशंसे विजयाय संजय ॥२१३॥
यदाश्रौषं ब्रह्मशिरोऽर्जुनेन
स्वस्तीत्युक्त्वास्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय संजय ॥२१४॥
यदाश्रौषं द्रोणपुत्रेण गर्भे
वैराट्या वै पात्यमाने महास्त्रैः ।
द्वैपायनः केशवो द्रोणपुत्रं
परस्परेणाभिशापैः शशाप ॥२१५॥
शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा बन्धुभिः पितृभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥२१६॥

कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं पाण्डवानां च सप्त ।
द्व्यूना विंशतिराहताक्षौहिणीनां
तस्मिन् संग्रामे भैरवे क्षत्रियाणाम् ॥२१७॥
तमस्त्वतीव विस्तीर्णं मोह आविशतीव माम् ।
संज्ञां नोपलभे सूत मनो विह्वलतीव मे ॥२१८॥

*सौतिरुवाच*

इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहुदुःखितः ।
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् ॥२१९॥

*धृतराष्ट्र उवाच*

संजयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥२२०॥

*सौतिरुवाच*

तं तथावादिनं दीनं विलपन्तं महीपतिम् ।
निःश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः ॥२२१॥
गावल्गणिरिदं धीमान् महार्थं वाक्यमब्रवीत् ।

*संजय उवाच*

श्रुतवानसि वै राजन् महोत्साहान् महाबलान् ॥२२२॥
द्वैपायनस्य वदतो नारदस्य च धीमतः ।
महत्सु राजवंशेषु गुणैः समुदितेषु च ॥२२३॥
जातान् दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः ।
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाऽऽप्तदक्षिणैः ॥२२४॥
अस्मिँल्लोके यशः प्राप्य ततः कालवशं गतान् ।
शैब्यं महारथं वीरं सृञ्जयं जयतां वरम् ॥२२५॥
सुहोत्रं रन्तिदेवं च काक्षीवन्तमथौशिजम् ।
बाह्लीकं दमनं चैद्यं शर्यातिमजितं नलम् ॥२२६॥
विश्वामित्रममित्रघ्नमम्बरीषं महाबलम् ।
मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ॥२२७॥
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् ।
कृतवीर्यं महाभागं तथैव जनमेजयम् ॥२२८॥
ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ।
चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा ॥२२९॥
इति राज्ञां चतुर्विंशन्नारदेन सुरर्षिणा ।
पुत्रशोकाभितप्ताय पुरा श्वैत्याय कीर्तितम् ॥२३०॥
तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ।
महारथा महात्मानः सर्वैः समुदिता गुणैः ॥२३१॥
पूरुः कुरुर्यदुः शूरो विष्वगश्वो महाद्युतिः ।
अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः ॥२३२॥
विजयो वीतिहोत्रोऽङ्गो भवः श्वेतो बृहद्गुरुः ।
उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः ॥२३३॥
दम्भोद्भवः परो वेनः सगरः संकृतिर्निमिः ।
अजेयः परशुः पुण्ड्रः शम्भुर्देवावृधोऽनघः ॥२३४॥

देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः ॥२३५॥
सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः ।
जानुजङ्घोऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः ॥२३६॥
बलबन्धुर्निरामर्दः केतुशृङ्गो बृहद्बलः ।
धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ॥२३७॥
अवीक्षिच्चपलो धूर्तः कृतबन्धुर्दृढेषुधिः ।
महापुराणसम्भाव्यः प्रत्यङ्गः परहा श्रुतिः ॥२३८॥
एते चान्ये च राजानः शतशोऽथ सहस्रशः ।
श्रूयन्ते शतशश्चान्ये संख्यातश्चैव पद्मशः ॥२३९॥
हित्वा सुविपुलान् भोगान् बुद्धिमन्तो महाबलाः ।
राजानो निधनं प्राप्तास्तव पुत्रा इव प्रभो ॥२४०॥
येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च ।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्जवम् ॥२४१॥
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ।
सर्वर्द्धिगुणसम्पन्नास्ते चापि निधनं गताः ॥२४२॥
तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ।
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि ॥२४३॥
श्रुतवानसि मेधावी बुद्धिमान् प्राज्ञसम्मतः ।
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत ॥२४४॥
निग्रहानुग्रहौ चापि विदितौ ते नराधिप ।
नात्यन्तमेवानुवृत्तिः कार्या ते पुत्ररक्षणे ॥२४५॥
भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।
दैवं प्रज्ञाविशेषेण को निवर्तितुमर्हति ॥२४६॥
विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥२४७॥
कालः सृजति भूतानि कालः संहरते प्रजाः ।
संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥२४८॥
कालो हि कुरुते भावान् सर्वलोके शुभाशुभान् ।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ॥२४९॥
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।
कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥२५०॥
अतीतानागता भावा ये च वर्तन्ति साम्प्रतम् ।
तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि ॥२५१॥

*सौतिरुवाच*

इत्येवं पुत्रशोकार्तं धृतराष्ट्रं जनेश्वरम् ।
आश्वास्य स्वस्थमकरोत् सूतो गावल्गणिस्तदा ॥२५२॥
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ॥२५३॥
भारताध्ययनं पुण्यमपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥२५४॥
देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमलाः ।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षा महोरगाः ॥२५५॥
भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥२५६॥
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥२५७॥
असच्च सदसच्चैव यस्माद् विश्वं प्रवर्तते ।
संततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥२५८॥
अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं यच्च स एव परिगीयते ॥२५९॥
यत्तद् यतिवरा मुक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥२६०॥
श्रद्दधानः सदा युक्तः सदा धर्मपरायणः ।
आसेवन्निममध्यायं नरः पापात् प्रमुच्यते ॥२६१॥
अनुक्रमणिकाध्यायं भारतस्येममादितः ।
आस्तिकः सततं शृण्वन् न कृच्छ्रेष्ववसीदति ॥२६२॥
उभे संध्ये जपन् किंचित् सद्यो मुच्येत किल्बिषात् ।
अनुक्रमण्या यावत् स्यादह्ना राज्या च संचितम् ॥२६३॥
भारतस्य वपुर्ह्येतत् सत्यं चामृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥२६४॥
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥२६५॥
यथैतानीतिहासानां तथा भारतमुच्यते ।
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः ॥२६६॥
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥२६७॥
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ।
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते ॥२६८॥
भ्रूणहत्यादिकं चापि पापं जह्यादसंशयम् ।
य इमं शुचिरध्यायं पठेत् पर्वणि पर्वणि ॥२६९॥
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ।
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ॥२७०॥
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः ।
एकतश्चतुरो वेदान् भारतं चैतदेकतः ॥२७१॥
पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् ।
चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ॥२७२॥

तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते ।
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् ॥२७३॥
महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥२७४॥

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्क-
स्तान्येव भावोपहतानि कल्कः ॥२७५॥

इति श्रीमहाभारते आदिपर्वणि अनुक्रमणिकापर्वणि प्रथमोऽध्यायः ॥ १ ॥

( पर्वसंग्रहपर्व )

## द्वितीयोऽध्यायः

समन्तपञ्चकक्षेत्रवर्णनम्, अक्षौहिणीसेनायाः परिमाणम्, महाभारतोक्तपर्वणां तेषां विषयाणां च समासतः संग्रहः, महाभारतश्रवणपठनयोः फलं च

*ऋषय ऊचुः*

समन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत् सर्वं यथातत्त्वं श्रोतुमिच्छामहे वयम् ॥ १ ॥

*सौतिरुवाच*

शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः ।
समन्तपञ्चकाख्यं च श्रोतुमर्हथ सत्तमाः ॥ २ ॥
त्रेताद्वापरयोः संधौ रामः शस्त्रभृतां वरः ।
असकृत् पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ ३ ॥
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥ ४ ॥
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन् संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५ ॥
अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन् ।
राम राम महाभाग प्रीताः स्म तव भार्गव ॥ ६ ॥
अनया पितृभक्त्या च विक्रमेण तव प्रभो ।
वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते ॥ ७ ॥

*राम उवाच*

यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ ८ ॥
अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ९ ॥
एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन् ।
तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १० ॥
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति पुण्यं तत् परिकीर्तितम् ॥ ११ ॥
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ १२ ॥
अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ १३ ॥
तस्मिन् परमधर्मिष्ठे देशे भूदोषवर्जिते ।
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १४ ॥
समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः ।
एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ॥ १५ ॥
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्तितः ।
तदेतत् कथितं सर्वं मया ब्राह्मणसत्तमाः ।
यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः ॥ १६ ॥

*ऋषय ऊचुः*

अक्षौहिण्य इति प्रोक्तं यत् त्वया सूतनन्दन ।
एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १७ ॥
अक्षौहिण्याः परीमाणं नराश्वरथदन्तिनाम् ।
यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १८ ॥

*सौतिरुवाच*

एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १९ ॥
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २० ॥
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ २१ ॥
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ २२ ॥
अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः ।
संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ २३ ॥
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।
गजानां च परीमाणमेतदेव विनिर्दिशेत् ॥ २४ ॥
ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ २५ ॥
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया ॥ २६ ॥

एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ।
यां वः कथितवानस्मि विस्तरेण तपोधनाः ॥ २७ ॥
एतया संख्यया ह्यासन् कुरुपाण्डवसेनयोः ।
अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु ॥ २८ ॥
समेतास्तत्र वै देशे तत्रैव निधनं गताः ।
कौरवान् कारणं कृत्वा कालेनाद्भुतकर्मणा ॥ २९ ॥
अहानि युयुधे भीष्मो दशैव परमास्त्रवित् ।
अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम् ॥ ३० ॥
अहनी युयुधे द्वे तु कर्णः परबलार्दनः ।
शल्योऽर्धदिवसं चैव गदायुद्धमतः परम् ॥ ३१ ॥
तस्यैव दिवसस्यान्ते द्रौणिहार्दिक्यगौतमाः ।
प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् ॥ ३२ ॥
यत्तु शौनक सत्रे ते भारताख्यानमुत्तमम् ।
जनमेजयस्य तत् सत्रे व्यासशिष्येण धीमता ॥ ३३ ॥
कथितं विस्तरार्थं च यशो वीर्यं महीक्षिताम् ।
पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतम् ॥ ३४ ॥
विचित्रार्थपदाख्यानमनेकसमयान्वितम् ।
प्रतिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः ॥ ३५ ॥
आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् ।
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ॥ ३६ ॥
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३७ ॥
तदेतद् भारतं नाम कविभिस्तूपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३८ ॥
इतिहासोत्तमे यस्मिन्नर्पिता बुद्धिरुत्तमा ।
स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक् ॥ ३९ ॥
तस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ ४० ॥
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ।
पर्वानुक्रमणी पूर्वं द्वितीयः पर्वसंग्रहः ॥ ४१ ॥
पौष्यं पौलोममास्तीकमादिरंशावतारणम् ।
ततः सम्भवपर्वोक्तमद्भुतं रोमहर्षणम् ॥ ४२ ॥
दाहो जतुगृहस्यात्र हैडिम्बं पर्व चोच्यते ।
ततो बकवधः पर्व पर्व चैत्ररथं ततः ॥ ४३ ॥
ततः स्वयंवरो देव्याः पाञ्चाल्याः पर्व चोच्यते ।
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ॥ ४४ ॥
विदुरागमनं पर्व राज्यलम्भस्तथैव च ।
अर्जुनस्य वने वासः सुभद्राहरणं ततः ॥ ४५ ॥
सुभद्राहरणादूर्ध्वं ज्ञेया हरणहारिका ।
ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनम् ॥ ४६ ॥
सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परम् ।
जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ ४७ ॥
पर्व दिग्विजयादूर्ध्वं राजसूयिकमुच्यते ।
ततश्चार्घाभिहरणं शिशुपालवधस्ततः ॥ ४८ ॥
द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ।
तत आरण्यकं पर्व किर्मीरवध एव च ॥ ४९ ॥
अर्जुनस्याभिगमनं पर्व ज्ञेयमतः परम् ।
ईश्वरार्जुनयोर्युद्धं पर्व कैरातसंज्ञितम् ॥ ५० ॥
इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
नलोपाख्यानमपि च धार्मिकं करुणोदयम् ॥ ५१ ॥
तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ।
जटासुरवधः पर्व यक्षयुद्धमतः परम् ॥ ५२ ॥
निवातकवचैर्युद्धं पर्व चाजगरं ततः ।
मार्कण्डेयसमास्या च पर्वानन्तरमुच्यते ॥ ५३ ॥
संवादश्च ततः पर्व द्रौपदीसत्यभामयोः ।
घोषयात्रा ततः पर्व मृगस्वप्नोद्भवं ततः ॥ ५४ ॥
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च ।
द्रौपदीहरणं पर्व जयद्रथविमोक्षणम् ॥ ५५ ॥
पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतम् ।
रामोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ॥ ५६ ॥
कुण्डलाहरणं पर्व ततः परमिहोच्यते ।
आरणेयं ततः पर्व वैराटं तदनन्तरम् ।
पाण्डवानां प्रवेशश्च समयस्य च पालनम् ॥ ५७ ॥
कीचकानां वधः पर्व पर्व गोग्रहणं ततः ।
अभिमन्योश्च वैराट्याः पर्व वैवाहिकं स्मृतम् ॥ ५८ ॥
उद्योगपर्व विज्ञेयमत ऊर्ध्वं महाद्भुतम् ।
ततः संजययानाख्यं पर्व ज्ञेयमतः परम् ॥ ५९ ॥
प्रजागरं तथा पर्व धृतराष्ट्रस्य चिन्तया ।
पर्व सानत्सुजातं वै गुह्यमध्यात्मदर्शनम् ॥ ६० ॥
यानसंधिस्ततः पर्व भगवद्यानमेव च ।
मातलीयमुपाख्यानं चरितं गालवस्य च ॥ ६१ ॥
सावित्रं वामदेव्यं च वैन्योपाख्यानमेव च ।
जामदग्न्यमुपाख्यानं पर्व षोडशराजिकम् ॥ ६२ ॥
सभाप्रवेशः कृष्णस्य विदुलापुत्रशासनम् ।
उद्योगः सैन्यनिर्याणं विश्वोपाख्यानमेव च ॥ ६३ ॥
ज्ञेयं विवादपर्वात्र कर्णस्यापि महात्मनः ।
निर्याणं च ततः पर्व कुरुपाण्डवसेनयोः ॥ ६४ ॥
रथातिरथसंख्या च पर्वोक्तं तदनन्तरम् ।
उलूकदूतागमनं पर्वामर्षविवर्धनम् ॥ ६५ ॥
अम्बोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ।
भीष्माभिषेचनं पर्व ततश्चाद्भुतमुच्यते ॥ ६६ ॥
जम्बूखण्डविनिर्माणं पर्वोक्तं तदनन्तरम् ।
भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्तनम् ॥ ६७ ॥
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः ।
द्रोणाभिषेचनं पर्व संशप्तकवधस्ततः ॥ ६८ ॥

अभिमन्युवधः पर्व प्रतिज्ञापर्व चोच्यते ।
जयद्रथवधः पर्व घटोत्कचवधस्ततः ॥ ६९ ॥
ततो द्रोणवधः पर्व विज्ञेयं लोमहर्षणम् ।
मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते ॥ ७० ॥
कर्णपर्व ततो ज्ञेयं शल्यपर्व ततः परम् ।
ह्रदप्रवेशनं पर्व गदायुद्धमतः परम् ॥ ७१ ॥
सारस्वतं ततः पर्व तीर्थवंशानुकीर्तनम् ।
अत ऊर्ध्वं सुबीभत्सं पर्व सौप्तिकमुच्यते ॥ ७२ ॥
ऐषीकं पर्व चोद्दिष्टमत ऊर्ध्वं सुदारुणम् ।
जलप्रदानिकं पर्व स्त्रीविलापस्ततः परम् ॥ ७३ ॥
श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्ध्वदेहिकम् ।
चार्वाकनिग्रहः पर्व रक्षसो ब्रह्मरूपिणः ॥ ७४ ॥
आभिषेचनिकं पर्व धर्मराजस्य धीमतः ।
प्रविभागो गृहाणां च पर्वोक्तं तदनन्तरम् ॥ ७५ ॥
शान्तिपर्व ततो यत्र राजधर्मानुशासनम् ।
आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ॥ ७६ ॥
शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् ।
प्रादुर्भावश्च दुर्वासः संवादश्चैव मायया ॥ ७७ ॥
ततः पर्व परिज्ञेयमानुशासनिकं परम् ।
स्वर्गारोहणिकं चैव ततो भीष्मस्य धीमतः ॥ ७८ ॥
ततोऽऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् ।
अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ॥ ७९ ॥
पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च ।
नारदागमनं पर्व ततः परमिहोच्यते ॥ ८० ॥
मौसलं पर्व चोद्दिष्टं ततो घोरं सुदारुणम् ।
महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ॥ ८१ ॥
हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् ।
विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा ॥ ८२ ॥
भविष्यपर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् ।
एतत् पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ॥ ८३ ॥
यथावत् सूतपुत्रेण लौमहर्षणिना ततः ।
उक्तानि नैमिषारण्ये पर्वाण्यष्टादशैव तु ॥ ८४ ॥
समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः ।
पौष्यं पौलोममास्तीकमादिरंशावतारणम् ॥ ८५ ॥
सम्भवो जतुवेश्माख्यं हिडिम्बबकयोर्वधः ।
तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरः ॥ ८६ ॥
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ।
विदुरागमनं चैव राज्यलम्भस्तथैव च ॥ ८७ ॥
वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः ।
हरणाहरणं चैव दहनं खाण्डवस्य च ॥ ८८ ॥
मयस्य दर्शनं चैव आदिपर्वणि कथ्यते ।
पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् ॥ ८९ ॥
पौलोमे भृगुवंशस्य विस्तारः परिकीर्तितः ।
आस्तीके सर्वनागानां गरुडस्य च सम्भवः ॥ ९० ॥
क्षीरोदमथनं चैव जन्मोच्चैःश्रवसस्तथा ।
यजतः सर्पसत्रेण राज्ञः पारिक्षितस्य च ॥ ९१ ॥
कथेयमभिनिर्वृत्ता भरतानां महात्मनाम् ।
विविधाः सम्भवा राज्ञामुक्ताः सम्भवपर्वणि ॥ ९२ ॥
अन्येषां चैव शूराणामृषेर्द्वैपायनस्य च ।
अंशावतरणं चात्र देवानां परिकीर्तितम् ॥ ९३ ॥
दैत्यानां दानवानां च यक्षाणां च महौजसाम् ।
नागानामथ सर्पाणां गन्धर्वाणां पतत्त्रिणाम् ॥ ९४ ॥
अन्येषां चैव भूतानां विविधानां समुद्भवः ।
महर्षेराश्रमपदे कण्वस्य च तपस्विनः ॥ ९५ ॥
शकुन्तलायां दुष्यन्ताद् भरतश्चापि जज्ञिवान् ।
यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ॥ ९६ ॥
वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् ।
शान्तनोर्वेश्मनि पुनस्तेषां चारोहणं दिवि ॥ ९७ ॥
तेजोंऽशानां च सम्पातो भीष्मस्याप्यत्र सम्भवः ।
राज्याच्चिवर्तनं तस्य ब्रह्मचर्यव्रते स्थितिः ॥ ९८ ॥
प्रतिज्ञापालनं चैव रक्षा चित्राङ्गदस्य च ।
हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः ॥ ९९ ॥
विचित्रवीर्यस्य तथा राज्ये सम्प्रतिपादनम् ।
धर्मस्य नृषु सम्भूतिरणीमाण्डव्यशापजा ॥१००॥
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा ।
धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च सम्भवः ॥१०१॥
वारणावतयात्रायां मन्त्रो दुर्योधनस्य च ।
कूटस्य धार्तराष्ट्रेण प्रेषणं पाण्डवान् प्रति ॥१०२॥
हितोपदेशश्च पथि धर्मराजस्य धीमतः ।
विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ॥१०३॥
विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया ।
निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि ॥१०४॥
पुरोचनस्य चात्रैव दहनं सम्प्रकीर्तितम् ।
पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् ॥१०५॥
तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात् ।
घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्तिता ॥१०६॥
महर्षेर्दर्शनं चैव व्यासस्यामिततेजसः ।
तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने ॥१०७॥
अज्ञातचर्यया वासो यत्र तेषां प्रकीर्तितः ।
बकस्य निधनं चैव नागराणां च विस्मयः ॥१०८॥
सम्भवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव ह ।
ब्राह्मणात् समुपश्रुत्य व्यासवाक्यप्रचोदिताः ॥१०९॥
द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया ।
पञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः ॥११०॥

अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा ।
सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे ॥१११॥
तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम् ।
भ्रातृभिः सहितः सर्वैः पञ्चालानभितो ययौ ॥११२॥
पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनंजयः ।
द्रौपदीं लब्धवानत्र मध्ये सर्वमहीक्षिताम् ॥११३॥
भीमसेनार्जुनौ यत्र संरब्धान् पृथिवीपतीन् ।
शल्यकर्णौ च तरसा जितवन्तौ महामृधे ॥११४॥
दृष्ट्वा तयोश्च तद्वीर्यमप्रमेयममानुषम् ।
शङ्कमानौ पाण्डवांस्तान् रामकृष्णौ महामती ॥११५॥
जग्मतुस्तैः समागन्तुं शालां भार्गववेश्मनि ।
पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च ॥११६॥
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ।
द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः ॥११७॥
क्षत्तुश्च धृतराष्ट्रेण प्रेषणं पाण्डवान् प्रति ।
विदुरस्य च सम्प्राप्तिर्दर्शनं केशवस्य च ॥११८॥
खाण्डवप्रस्थवासश्च तथा राज्यार्धसर्जनम् ।
नारदस्याज्ञया चैव द्रौपद्याः समयक्रिया ॥११९॥
सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्तितम् ।
अनन्तरं च द्रौपद्या सहासीनं युधिष्ठिरम् ॥१२०॥
अनुप्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधम् ।
मोक्षयित्वा गृहं गत्वा विप्रार्थं कृतनिश्चयः ॥१२१॥
समयं पालयन् वीरो वनं यत्र जगाम ह ।
पार्थस्य वनवासे च उलूप्या पथि संगमः ॥१२२॥
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च ।
तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः ॥१२३॥
शापाद् ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः ।
प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः ॥१२४॥
द्वारकायां सुभद्रा च कामयानेन कामिनी ।
वासुदेवस्यानुमते प्राप्ता चैव किरीटिना ॥१२५॥
गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने ।
अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः ॥१२६॥
द्रौपद्यास्तनयानां च सम्भवोऽनुप्रकीर्तितः ।
विहारार्थं च गतयोः कृष्णयोर्यमुनामनु ॥१२७॥
सम्प्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् ।
मयस्य मोक्षो ज्वलनाद् भुजङ्गस्य च मोक्षणम् ॥१२८॥
महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः ।
इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम् ॥१२९॥
अध्यायानां शते द्वे तु संख्याते परमर्षिणा ।
सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा ॥१३०॥
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
श्लोकाश्च चतुराशीतिर्मुनिनोक्ता महात्मना ॥१३१॥
द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते ।
सभाक्रिया पाण्डवानां किङ्कराणां च दर्शनम् ॥१३२॥
लोकपालसभाख्यानं नारदाद् देवदर्शिनः ।
राजसूयस्य चारम्भो जरासन्धवधस्तथा ॥१३३॥
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् ।
तथा दिग्विजयोऽत्रैव पाण्डवानां प्रकीर्तितः ॥१३४॥
राज्ञामागमनं चैव सार्हणानां महाक्रतौ ।
राजसूयेऽर्घसंवादे शिशुपालवधस्तथा ॥१३५॥
यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च ।
दुर्योधनस्यावहासो भीमेन च सभातले ॥१३६॥
यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् ।
यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् ॥१३७॥
यत्र द्यूतार्णवे मग्नां द्रौपदीं नौरिवार्णवात् ।
धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् ॥१३८॥
तारयामास तांस्तीर्णान् ज्ञात्वा दुर्योधनो नृपः ।
पुनरेव ततो द्यूते समाह्वयत पाण्डवान् ॥१३९॥
जित्वा स वनवासाय प्रेषयामास तांस्ततः ।
एतत् सर्वं सभापर्व समाख्यातं महात्मना ॥१४०॥
अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया ।
श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च ॥१४१॥
श्लोकाश्चैकादश ज्ञेयाः पर्वण्यस्मिन् द्विजोत्तमाः।
अतः परं तृतीयं तु ज्ञेयमारण्यकं महत् ॥१४२॥
वनवासं प्रयातेषु पाण्डवेषु महात्मसु ।
पौरानुगमनं चैव धर्मपुत्रस्य धीमतः ॥१४३॥
अन्नौषधीनां च कृते पाण्डवेन महात्मना ।
द्विजानां भरणार्थं च कृतमाराधनं रवेः ॥१४४॥
धौम्योपदेशात् तिग्मांशुप्रसादादन्नसम्भवः ।
हितं च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् ॥१४५॥
त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा ।
पुनरागमनं चैव धृतराष्ट्रस्य शासनात् ॥१४६॥
कर्णप्रोत्साहनाच्चैव धार्तराष्ट्रस्य दुर्मतेः ।
वनस्थान् पाण्डवान् हन्तुं मन्त्रो दुर्योधनस्य च ॥१४७॥
तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम् ।
निर्याणप्रतिषेधश्च सुरभ्याख्यानमेव च ॥१४८॥
मैत्रेयागमनं चात्र राज्ञश्चैवानुशासनम् ।
शापोत्सर्गश्च तेनैव राज्ञो दुर्योधनस्य च ॥१४९॥
किर्मीरस्य वधश्चात्र भीमसेनेन संयुगे ।
वृष्णीनामागमश्चात्र पञ्चालानां च सर्वशः ॥१५०॥
श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् ।
क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना ॥१५१॥
परिदेवनं च पाञ्चाल्या वासुदेवस्य संनिधौ ।
आश्वासनं च कृष्णेन दुःखार्तायाः प्रकीर्तितम् ॥१५२॥
तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा ।
सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् ॥१५३॥

कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ ५ ॥
अथ वा मन्यसे कृष्णं स्थविरं कुरुपुङ्गव ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ ६ ॥
अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ ७ ॥
आचार्यं मन्यसे कृष्णमथ वा कुरुनन्दन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ८ ॥
ऋत्विजं मन्यसे कृष्णमथ वा कुरुनन्दन ।
द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया ॥ ९ ॥
भीष्मे शान्तनवे राजन् स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके राजन् कथं कृष्णोऽर्चितस्त्वया ॥ १० ॥
अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन ॥ ११ ॥
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयार्चितः ॥ १२ ॥
द्रुमं किम्पुरुषाचार्यमतिक्रम्य तथार्चितः ।
भीष्मके चैव दुर्धर्षे पाण्डुवत् कृतलक्षणे ॥ १३ ॥
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च ।
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः ॥ १४ ॥
अयं च सर्वराज्ञां वै बलश्लाघी महाबलः ।
जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत ॥ १५ ॥
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः ।
तं च कर्णमतिक्रम्य कथं कृष्णस्त्वयार्चितः ॥ १६ ॥
नैवर्त्विग् नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ १७ ॥
अथ वाभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ १८ ॥
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान् सर्वे न लोभान्न च सान्त्वनात् ॥ १९ ॥
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान् न मन्यते ॥ २० ॥
किमन्यदवमानाद्धि यदेनं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ २१ ॥
अकस्माद् धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजामेवं युक्तां नियोजयेत् ॥ २२ ॥
योऽयं वृष्णिकुले जातो राजानं हतवान् पुरा ।
जरासंधं महात्मानमन्यायेन दुरात्मवान् ॥ २३ ॥
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
दर्शितं कृपणत्वं च कृष्णेऽर्घ्यस्य निवेदनात् ॥ २४ ॥
यदि भीतारच कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयापि बोद्धव्यं यां पूजां माधवार्हसि ॥ २५ ॥
अथ वा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्हः कस्मात् त्वमभ्यनुज्ञातवानसि ॥ २६ ॥
अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशिता श्वेव निर्जने ॥ २७ ॥
न त्वयं पार्थिवेन्द्राणामपमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ २८ ॥
क्लीबे दारक्रिया याद्दगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत् पूजा तथा ते मधुसूदन ॥ २९ ॥
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च याद्दशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद् यथातथम् ॥ ३० ॥
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात् सहितो राजभिस्तदा ॥ ३१ ॥

इति श्रीमहाभारते सभापर्वणि अर्घाभिहरणपर्वणि शिशुपालक्रोधे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

# अष्टात्रिंशोऽध्यायः

## युधिष्ठिरकर्तृकः शिशुपालस्यानुनयः, तदीयाक्षेपवचनानां भीष्मकर्तृकमुत्तरम्

*वैशम्पायन उवाच*

ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ १ ॥
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन् पारुष्यं च निरर्थकम् ॥ २ ॥
न हि धर्मं परं जातु नावबुध्येत पार्थिवः ।
भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा ॥ ३ ॥
पश्य चैतान् महीपालांस्त्वत्तो वृद्धतरान् बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत् त्वं क्षन्तुमर्हसि ॥ ४ ॥
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ ५ ॥

*भीष्म उवाच*

नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥ ६ ॥
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ ७ ॥
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ ८ ॥

न हि केवलमस्माकमयमर्च्यतमोऽच्युतः।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ ९ ॥
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः।
जगत् सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ १० ॥
तस्मात् सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान्।
एवं वक्तुं न चार्हस्त्वं मा ते भूद् बुद्धिरीदृशी ॥ ११ ॥
ज्ञानवृद्धा मया राजन् बहवः पर्युपासिताः।
तेषां कथयतां शौरेरहं गुणवतो गुणान् ॥ १२ ॥
समागतानामश्रौषं बहून् बहुमतान् सताम्।
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः ॥ १३ ॥
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे।
न केवलं वयं कामाच्चेदिराज जनार्दनम् ॥ १४ ॥
न सम्बन्धं पुरस्कृत्य कृतार्थं वा कथंचन।
अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहम् ॥ १५ ॥
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुञ्ज्महे।
न च कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः ॥ १६ ॥
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः।
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥ १७ ॥
वैश्यानां धान्यधनवाञ्छूद्राणामेव जन्मतः।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ॥ १८ ॥
वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा।
नृणां लोके हि कोऽन्योऽस्ति विशिष्टः केशवादृते॥१९॥
दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा।
सन्नतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते ॥ २० ॥
तमिमं गुणसम्पन्नमार्यं च पितरं गुरुम्।
अर्घ्यमर्चितमर्चार्हं सर्वे संक्षन्तुमर्हथ ॥ २१ ॥
ऋत्विग् गुरुस्तथाऽऽचार्यः स्नातको नृपतिः प्रियः।
सर्वमेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः ॥ २२ ॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः।
कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम् ॥ २३ ॥
एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः।
परश्च सर्वभूतेभ्यस्तस्मात् पूज्यतमोऽच्युतः ॥ २४ ॥
बुद्धिर्मनो महद् वायुस्तेजोऽम्भः खं मही च या।
चतुर्विधं च यद् भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ २५ ॥
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये।
दिशश्च विदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ २६ ॥
अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम्।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥ २७ ॥
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम्।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥ २८ ॥
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः।
सदेवकेषु लोकेषु भगवान् केशवो मुखम् ॥ २९ ॥

[ भगवतो नारायणस्य महिमा तत्कृतो मधुकैटभवधश्च ]

( वैशम्पायन उवाच

ततो भीष्मस्य तच्छ्रुत्वा वचः काले युधिष्ठिरः।
उवाच मतिमान् भीष्मं ततः कौरवनन्दनः ॥

युधिष्ठिर उवाच

विस्तरेणास्य देवस्य कर्माणीच्छामि सर्वशः।
श्रोतुं भगवतस्तानि प्रब्रवीहि पितामह ॥
कर्मणामानुपूर्व्यं च प्रादुर्भावांश्च मे विभोः।
यथा च प्रकृतिः कृष्णे तन्मे ब्रूहि पितामह ॥

वैशम्पायन उवाच

एवमुक्तस्तदा भीष्मः प्रोवाच भरतर्षभम्।
युधिष्ठिरममित्रघ्नं तस्मिन् क्षत्रसमागमे ॥
समक्षं वासुदेवस्य देवस्येव शतक्रतोः।
कर्माण्यसुकराण्यन्यैराचचक्षे जनाधिप ॥
शृण्वतां पार्थिवानां च धर्मराजस्य चान्तिके।
इदं मतिमतां श्रेष्ठः कृष्णं प्रति विशाम्पते ॥
साम्नैवामन्त्र्य राजेन्द्र चेदिराजमरिंदमम्।
भीमकर्मा ततो भीष्मो भूयः स इदमब्रवीत् ॥
कुरूणां चापि राजानं युधिष्ठिरमुवाच ह।

भीष्म उवाच

वर्तमानामतीतां च शृणु राजन् युधिष्ठिर ॥
ईश्वरस्योत्तमस्यैनां कर्मणां गहनां गतिम्।
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ॥
पुरा नारायणो देवः स्वयम्भूः प्रपितामहः।
सहस्रशीर्षः पुरुषो ध्रुवोऽव्यक्तः सनातनः ॥
सहस्राक्षः सहस्रास्यः सहस्रचरणो विभुः।
सहस्रबाहुः साहस्रो देवो नामसहस्रवान् ॥
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः।
अनेकवर्णो देवादिरव्यक्ताद् वै परे स्थितः ॥
असृजत् सलिलं पूर्वं स च नारायणः प्रभुः।
ततस्तु भगवांस्तोये ब्रह्माणमसृजत् स्वयम् ॥
ब्रह्मा चतुर्मुखो लोकान् सर्वांस्तानसृजत् स्वयम्।
आदिकाले पुरा ह्येवं सर्वलोकस्य चोद्भवः ॥
पुराथ प्रलये प्राप्ते नष्टे स्थावरजङ्गमे।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥
आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान्।
एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुः ॥
नारायणस्य चाङ्गानि सर्वदैवानि भारत।
शिरस्तस्य दिवं राजन् नाभिः खं चरणौ मही ॥
अश्विनौ घ्राणयोर्देवौ चक्षुषी शशिभास्करौ।
इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ॥

अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः ।
सर्वं व्याप्य हरिस्तस्थौ सूत्रं मणिगणानिव ॥

आभूतसम्प्लवान्तेऽथ दृष्ट्वा सर्वं तमोऽन्वितम् ।
नारायणो महायोगी सर्वज्ञः परमात्मवान् ॥

ब्रह्मभूतस्तदाऽऽत्मानं ब्रह्माणमसृजत् स्वयम् ।
सोऽध्यक्षः सर्वभूतानां प्रभूतः प्रभवोऽच्युतः ॥

सनत्कुमारं रुद्रं च मनुं चैव तपोधनान् ।
सर्वमेवासृजद् ब्रह्मा ततो लोकान् प्रजास्तथा ॥

ते च तद् व्यसृजंस्तत्र प्राप्ते काले युधिष्ठिर ।
तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतम् ॥

कल्पानां बहुकोट्यश्च समतीता हि भारत ।
आभूतसम्प्लवाश्चैव बहुकोट्योऽतिचक्रमुः ॥

मन्वन्तरयुगेऽजस्रं सकल्पा भूतसम्प्लवा ।
चक्रवत् परिवर्तन्ते सर्वं विष्णुमयं जगत् ॥

सृष्ट्वा चतुर्मुखं देवं देवो नारायणः प्रभुः ।
स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ॥

ब्रह्मा च सर्वदेवानां लोकस्य च पितामहः ।
ततो नारायणो देवः सर्वस्य प्रपितामहः ॥

अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ।
नारायणो जगच्चक्रे प्रभवाप्ययसंहितः ॥

एष नारायणो भूत्वा हरिरासीद् युधिष्ठिर ।
ब्रह्माणं शशिसूर्यौ च धर्मं चैवासृजत् स्वयम् ॥

बहुशः सर्वभूतात्मा प्रादुर्भवति कार्यतः ।
प्रादुर्भावांस्तु वक्ष्यामि दिव्यान् देवगणैर्युतान् ॥

सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यवान् ।
पूर्णे युगसहस्रेऽथ देवदेवो जगत्पतिः ॥

ब्रह्माणं कपिलं चैव परमेष्ठिनमेव च ।
देवान् सप्त ऋषींश्चैव शङ्करं च महायशाः ॥

सनत्कुमारं भगवान् मनुं चैव प्रजापतिम् ।
पुरा चक्रेऽथ देवादीन् प्रदीप्ताग्निसमप्रभः ॥

येन चार्णवमध्यस्थौ नष्टे स्थावरजङ्गमे ।
नष्टदेवासुरनरे प्रणष्टोरगराक्षसे ॥

योद्धुकामौ सुदुर्धर्षौ भ्रातरौ मधुकैटभौ ।
हतौ भगवता तेन तयोर्दत्त्वा वृतं वरम् ॥

भूमिं बद्ध्वा कृतौ पूर्वं मृन्मयौ द्वौ महासुरौ ।
कर्णस्रोतोद्भवौ तौ तु विष्णोस्तस्य महात्मनः ॥

महार्णवे प्रस्वपतः शैलराजसमौ स्थितौ ।
तौ विवेश स्वयं वायुः ब्रह्मणा साधु चोदितः ॥

तौ दिवं छादयित्वा तु ववृधाते महासुरौ ।
वायुप्राणौ तु तौ दृष्ट्वा ब्रह्मा पर्यामृशच्छनैः ॥

एकं मृदुतरं बुद्ध्वा कठिनं बुध्य चापरम् ।
नामनी तु तयोश्चक्रे स विभुः सलिलोद्भवः ॥

मृदुस्त्वयं मधुर्नाम कठिनः कैटभः स्वयम् ।
तौ दैत्यौ कृतनामानौ चेरतुर्बलगर्वितौ ॥

तौ पुराथ दिवं सर्वां प्राप्तौ राजन् महासुरौ ।
प्रच्छाद्याथ दिवं सर्वां चेरतुर्मधुकैटभौ ॥

सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ।
तौ गतावसुरौ दृष्ट्वा ब्रह्मा लोकपितामहः ॥

एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ।
स पद्मे पद्मनाभस्य नाभिदेशात् समुत्थिते ॥

आसीदादौ स्वयंजन्म तत् पङ्कजमपङ्कजम् ।
पूजयामास वसतिं ब्रह्मा लोकपितामहः ॥

तावुभौ जलगर्भस्थौ नारायणचतुर्मुखौ ।
बहून् वर्षायुतान्यप्सु शयानौ न चकम्पतुः ॥

अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ ।
आजग्मतुस्तौ तं देशं यत्र ब्रह्मा व्यवस्थितः ॥

तौ दृष्ट्वा लोकनाथस्तु कोपात् संरक्तलोचनः ।
उत्पपाताथ शयनात् पद्मनाभो महाद्युतिः ॥

तद् युद्धमभवद् घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा घोरे त्रैलोक्ये जलतां गते ॥

तदभूत् तुमुलं युद्धं वर्षसङ्घान् सहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ॥

अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम् ॥

प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥

हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।
यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ ॥

तयोः स वचनं श्रुत्वा तदा नारायणः प्रभुः ।
तौ प्रगृह्य मृधे दैत्यौ दोर्भ्यां तौ समपीडयत् ॥

ऊरुभ्यां निधनं चक्रे तावुभौ मधुकैटभौ ।
तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ॥

मेदो मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्मिभिः ।
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ॥

नारायणश्च भगवानसृजद् विविधाः प्रजाः ।
दैत्ययोर्मेदसाच्छन्ना सर्वा राजन् वसुन्धरा ॥

तदा प्रभृति कौन्तेय मेदिनीति स्मृता मही ।
प्रभावात् पद्मनाभस्य शाश्वती च कृता नृणाम् ॥

( दाक्षिणात्यग्रन्थेऽत्राध्यायसमाप्तिः )

[ वराहनृसिंहवामनदत्तात्रेयपरशुरामश्रीरामश्रीकृष्ण-कल्क्यवताराणां संक्षेपतो वर्णनम् ]

*भीष्म उवाच*

प्रादुर्भावसहस्राणि समतीतान्यनेकशः ।
यथाशक्ति तु वक्ष्यामि शृणु तान् कुरुनन्दन ॥

पुरा कमलनाभस्य स्वपतः सागराम्भसि ।
पुष्करे यत्र सम्भूता देवा ऋषिगणैः सह ॥
एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः ।
पुराणः कथ्यते यत्र वेदश्रुतिसमाहितः ॥
वाराहस्तु श्रुतिमुखः प्रादुर्भावो महात्मनः ।
यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ॥
उज्जहार महीं तोयात् सशैलवनकाननाम् ।
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ॥
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ।
अहोरात्रेक्षणो दिव्यो वेदाङ्गः श्रुतिभूषणः ॥
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ।
धर्मसत्यमयः श्रीमान् कर्मविक्रमसत्कृतः ॥
प्रायश्चित्तनखो धीरः पशुजानुर्महावृषः ।
औद्गात्रहोमलिङ्गोऽसौ फलबीजमहौषधिः ॥
बाह्यान्तरात्मा मन्त्रास्थिविकृतः सौम्यदर्शनः ।
वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान् ॥
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिराचितः ।
दक्षिणाहृदयो योगी महाशास्त्रमयो महान् ॥
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ।
छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः ॥
एवं यज्ञवराहो वै भूत्वा विष्णुः सनातनः ।
महीं सागरपर्यन्तां सशैलवनकाननाम् ॥
एकार्णवजले भ्रष्टामेकार्णवगतः प्रभुः ।
मज्जितां सलिले तस्मिन् स्वदेवीं पृथिवीं तदा ॥
उज्जहार विषाणेन मार्कण्डेयस्य पश्यतः ।
शृङ्गेणेमां समुद्धृत्य लोकानां हितकाम्यया ॥
सहस्रशीर्षो देवो हि निर्ममे जगतीं प्रभुः ।
एवं यज्ञवराहेण भूतभव्यभवात्मना ॥
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा ।
निहता दानवाः सर्वे देवदेवेन विष्णुना ॥
वाराहः कथितो ह्येष नारसिंहमथो शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः ॥
दैत्येन्द्रो बलवान् राजन् सुरारिर्बलगर्वितः ।
हिरण्यकशिपुर्नाम आसीत् त्रैलोक्यकण्टकः ॥
दैत्यानामादिपुरुषो वीर्यवान् धृतिमान् बली ।
प्रविश्य स वनं राजंश्चकार तप उत्तमम् ॥
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जपोपवासैस्तस्यासीत् स्थाणुर्मौनव्रतो दृढः ॥
ततो दमशमाभ्यां च ब्रह्मचर्येण चानघ ।
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च ॥
ततः स्वयम्भूर्भगवान् स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥
आदित्यैर्वसुभिः साध्यैः मरुद्भिर्दैवतैः सह ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः ॥
दिशाभिर्विदिशाभिश्च नदीभिः सागरैस्तथा ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्चापरैर्ग्रहैः ॥
देवर्षिभिस्तपोयुक्तैः सिद्धैः सप्तर्षिभिस्तथा ।
राजर्षिभिः पुण्यतमैर्गन्धर्वैरप्सरोगणैः ॥
चराचरगुरुः श्रीमान् वृतः सर्वसुरैस्तथा ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यमागम्य चाब्रवीत् ॥

*ब्रह्मोवाच*

प्रीतोऽस्मि तव भक्तस्य तपसानेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥

*हिरण्यकशिपुरुवाच*

न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ।
न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥
ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह ।
शपेयुस्तपसा युक्ता वर एष वृतो मया ॥
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन च ।
न शुष्केण न चार्द्रेण स्यान्न वान्येन मे वधः ॥
नाकाशे वा न भूमौ वा रात्रौ वा दिवसेऽपि वा ।
नान्तर्वा न बहिर्वापि स्याद् वधो मे पितामह ॥
पशुभिर्वा मृगैर्न स्यात् पक्षिभिर्वा सरीसृपैः ।
ददासि चेद् वरानेतान् देवदेव वृणोम्यहम् ॥

*ब्रह्मोवाच*

एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः ।
सर्वकामान् वरांस्तात प्राप्स्यसे त्वं न संशयः ॥

*भीष्म उवाच*

एवमुक्त्वा स भगवानाकाशेन जगाम ह ।
रराज ब्रह्मलोके स ब्रह्मर्षिगणसेवितः ॥
ततो देवाश्च नागाश्च गन्धर्वा मुनयस्तथा ।
वरप्रदानं श्रुत्वा ते ब्रह्माणमुपतस्थिरे ॥

*देवा ऊचुः*

वरेणानेन भगवन् बाधिष्यति स नोऽसुरः ।
तत् प्रसीदस्व भगवन् वधोऽस्य प्रविचिन्त्यताम् ॥
भवान् हि सर्वभूतानां स्वयम्भूरादिकृद् विभुः ।
स्रष्टा च हव्यकव्यानामव्यक्तप्रकृतिर्ध्रुवः ॥

*भीष्म उवाच*

ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः ।
प्रोवाच भगवान् वाक्यं सर्वदेवगणांस्तदा ॥

*ब्रह्मोवाच*

अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान् वधं कृष्णः करिष्यति ॥

*भीष्म उवाच*

एतच्छ्रुत्वा सुराः सर्वे ब्रह्मणा तस्य वै वधम्।
स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदान्विताः॥
लब्धमात्रे वरे चापि सर्वास्ता बाधते प्रजाः।
हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः॥
राज्यं चकार दैत्येन्द्रो दैत्यसङ्घैः समावृतः।
सप्त द्वीपान्वशे चक्रे लोकान् लोकान्तरान् बलात्॥
दिव्यलोकान् समस्तान् वै भोगान् दिव्यानवाप सः।
देवांस्त्रिभुवनस्थांस्तान् पराजित्य महासुरः॥
त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः।
यदा वरमदोन्मत्तो न्यवसद् दानवो दिवि॥
अथ लोकान् समस्तांश्च विजित्य स महासुरः।
भवेयमहमेवेन्द्रः सोमोऽग्निर्मारुतो रविः॥
सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश।
अहं क्रोधश्च कामश्च वरुणो वसवोऽर्यमा॥
धनदश्च धनाध्यक्षो यक्षः किम्पुरुषाधिपः।
एते भवेयमित्युक्त्वा स्वयं भूत्वा बलात् स च॥
तेषां गृहीत्वा स्थानानि तेषां कार्याण्यवाप सः।
इज्यश्चासीन्मखवरैः स तैर्देवर्षिसत्तमैः॥
नरकस्थान् समानीय स्वर्गस्थांस्तांश्चकार सः।
एवमादीनि कर्माणि कृत्वा दैत्यपतिर्बली॥
आश्रमेषु महाभागान् मुनीन् वै संशितव्रतान्।
सत्यधर्मपरान् दान्तान् पुरा धर्षितवांश्च सः॥
यज्ञीयान् कृतवान् दैत्यानयज्ञीयांश्च देवताः।
यत्र यत्र सुरा जग्मुस्तत्र तत्र व्रजत्युत॥
स्थानानि देवतानां तु हृत्वा राज्यमपालयत्।
पञ्च कोट्यश्च वर्षाणि नियुतान्येकषष्टि च॥
षष्टिश्चैव सहस्राणां जग्मुस्तस्य दुरात्मनः।
एतद् वर्षं स दैत्येन्द्रो भोगैश्वर्यमवाप सः॥
तेनातिबाध्यमानास्ते दैत्येन्द्रेण बलीयसा।
ब्रह्मलोकं सुरा जग्मुः सर्वे शक्रपुरोगमाः॥
पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन्।

*देवा ऊचुः*

भगवन् भूतभव्येश नस्त्रायस्व इहागतान्।
भयं दितिसुताद् घोरं भवत्यद्य दिवानिशम्॥
भगवन् सर्वभूतानां स्वयम्भूरादिकृद् विभुः।
स्रष्टा त्वं हव्यकव्यानामव्यक्तप्रकृतिर्ध्रुवः॥

*ब्रह्मोवाच*

श्रूयतामापदेवं हि दुर्विज्ञेया मयापि च।
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः॥
अव्यक्तः सर्वभूतानामचिन्त्यो विभुरव्ययः।
ममापि स तु युष्माकं व्यसने परमा गतिः॥
नारायणः परोऽव्यक्तादहमव्यक्तसम्भवः।
मत्तो जज्ञुः प्रजा लोकाः सर्वे देवासुराश्च ते॥
देवा यथाहं युष्माकं तथा नारायणो मम।
पितामहोऽहं सर्वस्य स विष्णुः प्रपितामहः॥
तमिमं विबुधा दैत्यं स विष्णुः संहरिष्यति।
तस्य नास्ति ह्यशक्यं च तस्माद् व्रजत मा चिरम्॥

*भीष्म उवाच*

पितामहवचः श्रुत्वा सर्वे ते भरतर्षभ।
विबुधा ब्रह्मणा सार्धं जग्मुः क्षीरोदधिं प्रति॥
आदित्या मरुतः साध्या विश्वे च वसवस्तथा।
रुद्रा महर्षयश्चैव अश्विनौ च सुरूपिणौ॥
अन्ये च दिव्या ये राजंस्ते सर्वे सगणाः सुराः।
चतुर्मुखं पुरस्कृत्य श्वेतद्वीपमुपस्थिताः॥
गत्वा क्षीरसमुद्रं तं शाश्वतीं परमां गतिम्।
अनन्तशयनं देवमनन्तं दीप्ततेजसम्॥
शरण्यं त्रिदशा विष्णुमुपतस्थुः सनातनम्।
देवं ब्रह्ममयं यज्ञं ब्रह्मदेवं महाबलम्॥
भूतं भव्यं भविष्यच्च प्रभुं लोकनमस्कृतम्।
नारायणं विभुं देवं शरण्यं शरणं गताः॥

*देवा ऊचुः*

त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्वधात्।
त्वं हि नः परमो धाता ब्रह्मादीनां सुरोत्तम॥
उत्फुल्लपद्मपत्राक्ष शत्रुपक्षभयङ्कर।
क्षयाय दितिवंशस्य शरण्यस्त्वं भवाद्य नः॥

*भीष्म उवाच*

देवानां वचनं श्रुत्वा तदा विष्णुः शुचिश्रवाः।
अदृश्यः सर्वभूतानां वक्तुमेवोपचक्रमे॥

*श्रीभगवानुवाच*

भयं त्यजध्वममरा अभयं वो ददाम्यहम्।
तदेवं त्रिदिवं देवाः प्रतिपद्यत मा चिरम्॥
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम्।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम्॥

*ब्रह्मोवाच*

भगवन् भूतभव्येश खिन्ना ह्येते भृशं सुराः।
तस्मात् त्वं जहि दैत्येन्द्रं क्षिप्रं कालोऽस्य मा चिरम्॥

*श्रीभगवानुवाच*

क्षिप्रं देवाः करिष्यामि त्वरया दैत्यनाशनम्।
तस्मात् त्वं विबुधाश्चैव प्रतिपद्यत वै दिवम्॥

*भीष्म उवाच*

एवमुक्त्वा स भगवान् विसृज्य त्रिदिवेश्वरान्।
नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा॥

नारसिंहेन वपुषा पाणिं निष्पिष्य पाणिना।
भीमरूपो महातेजा व्यादितास्य इवान्तकः॥
हिरण्यकशिपुं राजन् जगाम हरिरीश्वरः।
दैत्यास्तमागतं दृष्ट्वा नारसिंहं महाबलम्॥
ववर्षुः शस्त्रवर्षैस्ते सुसंक्रुद्धास्तदा हरिम्।
तैर्विसृष्टानि शस्त्राणि भक्षयामास वै हरिः॥
जघान च रणे दैत्यान् सहस्राणि बहून्यपि।
तान् निहत्य च दैत्येन्द्रान् सर्वान् क्रुद्धान् महाबलान्॥
अभ्यधावत् सुसंक्रुद्धो दैत्येन्द्रं बलगर्वितम्।
जीमूतघनसंकाशो जीमूतघननिस्वनः॥
जीमूत इव दीप्तौजा जीमूत इव वेगवान्।
देवारिर्दितिजो दुष्टो नृसिंहं समुपाद्रवत्॥
दैत्यं सोऽतिबलं दृष्ट्वा क्रुद्धशार्दूलविक्रमम्।
दीप्तैर्दैत्यगणैर्गुप्तं खरैर्नखमुखैरुत॥
ततः कृत्वा तु युद्धं वै तेन दैत्येन वै हरिः।
संध्याकाले महातेजाः प्रघाणे च त्वरान्वितः॥
ऊरौ निधाय दैत्येन्द्रं निर्बिभेद नखैर्हि तम्।
महाबलं महावीर्यं वरदानेन दर्पितम्॥
दैत्यश्रेष्ठं सुरश्रेष्ठो जघान तरसा हरिः।
हिरण्यकशिपुं हत्वा सर्वदैत्यांश्च वै तदा॥
विबुधानां प्रजानां च हितं कृत्वा महाद्युतिः।
प्रमुमोद हरिर्देवः स्थाप्य धर्मं तदा भुवि॥
एष ते नारसिंहोऽत्र कथितः पाण्डुनन्दन।
शृणु त्वं वामनं नाम प्रादुर्भावं महात्मनः॥
पुरा त्रेतायुगे राजन् बलिर्वैरोचनोऽभवत्।
दैत्यानां पार्थिवो वीरो बलेनाप्रतिमो बली॥
तदा बलिर्महाराज दैत्यसङ्घैः समावृतः।
विजित्य तरसा शक्रमिन्द्रस्थानमवाप सः॥
तेन वित्रासिता देवा बलिनाऽऽखण्डलादयः।
ब्रह्माणं तु पुरस्कृत्य गत्वा क्षीरोदधिं तदा॥
तुष्टुवुः सहिताः सर्वे देवं नारायणं प्रभुम्।
स तेषां दर्शनं चक्रे विबुधानां हरिः स्तुतः॥
प्रसादजं ह्यस्य विभोरदित्यां जन्म चोच्यते।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः॥
एष विष्णुरिति ख्यात इन्द्रस्यावरजोऽभवत्।
तस्मिन्नेव च काले तु दैत्येन्द्रो वीर्यवान् बलिः॥
अश्वमेधं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे।
वर्तमाने तदा यज्ञे दैत्येन्द्रस्य युधिष्ठिर॥
स विष्णुर्वामनो भूत्वा प्रच्छन्नो ब्रह्मवेषधृक्।
मुण्डो यज्ञोपवीती च कृष्णाजिनधरः शिखी॥
पलाशदण्डं संगृह्य वामनोऽद्भुतदर्शनः।
प्रविश्य स बलेर्यज्ञे वर्तमाने तु दक्षिणाम्॥
देहीत्युवाच दैत्येन्द्रं विक्रमांस्त्रीन् ममैव ह।
दीयतां त्रिपदीमात्रमित्ययाचन्महासुरम्॥
स तथेति प्रतिश्रुत्य प्रददौ विष्णवे तदा।
तेन लब्ध्वा हरिर्भूमिं जृम्भयामास वै भृशम्।
स शिशुः सदिवं खं च पृथिवीं च विशाम्पते॥
त्रिभिर्विक्रमणैरेतत् सर्वमाक्रमताभिभूः।
बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा॥
विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः।
विप्रचित्तिमुखाः क्रुद्धा दैत्यसङ्घा महाबलाः॥
नानावक्त्रा महाकाया नानावेषधरा नृप।
नानाप्रहरणा रौद्रा नानामाल्यानुलेपनाः॥
स्वान्यायुधानि संगृह्य प्रदीप्ता इव तेजसा।
क्रममाणं हरिं तत्र उपावर्तन्त भारत॥
प्रमथ्य सर्वान् दैतेयान् पादहस्ततलैस्तु तान्।
रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम्॥
सम्प्राप्य पादमाकाशमादित्यसदने स्थितः।
अत्यरोचत भूतात्मा भास्करं स्वेन तेजसा॥
प्रकाशयन् दिशः सर्वाः प्रदिशश्च महाबलः।
शुशुभे स महाबाहुः सर्वलोकान् प्रकाशयन्॥
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे।
नभः प्रक्रममाणस्य नाभ्यां किल तदा स्थितौ।
परमाक्रममाणस्य जानुभ्यां तौ व्यवस्थितौ॥
विष्णोरमितवीर्यस्य वदन्त्येवं द्विजातयः।
अथासाद्य कपालं स अण्डस्य तु युधिष्ठिर॥
तच्छिद्रात् स्यन्दिनी तस्य पादाद् भ्रष्टा तु निम्नगा।
ससार सागरं साऽऽशु पावनी सागरङ्गमा॥
जहार मेदिनीं सर्वां हत्वा दानवपुङ्गवान्।
आसुरीं श्रियमाहृत्य त्रींल्लोकान् स जनार्दनः॥
सपुत्रदारानसुरान् पाताले तानपातयत्।
नमुचिः शम्बरश्चैव प्रह्लादश्च महामनाः॥
पादपाताभिनिर्धूताः पाताले विनिपातिताः।
महाभूतानि भूतात्मा स विशेषेण वै हरिः॥
कालं च सकलं राजन् गात्रभूतान्यदर्शयत्।
तस्य गात्रे जगत् सर्वमानीतमिव दृश्यते॥
न किंचिदस्ति लोकेषु यदव्याप्तं महात्मना।
तद्धि रूपं महेशस्य देवदानवमानवाः॥
दृष्ट्वा तं मुमुहुः सर्वे विष्णुतेजोऽभिपीडिताः।
बलिर्बद्धोऽभिमानी च यज्ञवाटे महात्मना॥
विरोचनकुलं सर्वं पाताले विनिपातितम्॥
एवंविधानि कर्माणि कृत्वा गरुडवाहनः।
न विस्मयमुपागच्छत् पारमेष्ठ्येन तेजसा॥

स सर्वममरैश्वर्यं सम्प्रदाय शचीपतेः।
त्रैलोक्यं च ददौ शक्रे विष्णुर्दानवसूदनः॥
एष ते वामनो नाम प्रादुर्भावो महात्मनः।
वेदविद्भिर्द्विजैरेतत् कथ्यते वैष्णवं यशः॥
मानुषेषु यथा विष्णोः प्रादुर्भावं तथा शृणु॥
विष्णोः पुनर्महाराज प्रादुर्भावो महात्मनः।
दत्तात्रेय इति ख्यात ऋषिरासीन्महायशाः॥
तेन नष्टेषु वेदेषु क्रियासु च मखेषु च।
चातुर्वर्ण्ये च संकीर्णे धर्मे शिथिलतां गते॥
अभिवर्धति चाधर्मे सत्ये नष्टे स्थितेऽनृते।
प्रजासु क्षीयमाणासु धर्मे चाकुलतां गते॥
सयज्ञाः सक्रिया वेदाः प्रत्यानीताश्च तेन वै।
चातुर्वर्ण्यमसंकीर्णं कृतं तेन महात्मना॥
स एव वै यदा प्रादाद्धैहयाधिपतेर्वरम्।
तं हैहयानामधिपस्त्वर्जुनोऽभिप्रसादयत्॥
वने पर्यचरत् सम्यक् शुश्रूषुरनसूयकः।
निर्ममो निरहंकारो दीर्घकालमतोषयत्॥
आराध्य दत्तात्रेयं हि अगृह्णात् स वरानिमान्।
आप्तादाप्ततराद् विप्राद् विद्वान् विद्वन्निषेवितात्॥
ऋतेऽमरत्वं विप्रेण दत्तात्रेयेण धीमता।
वरैश्चतुर्भिः प्रवृत इमांस्तत्राभ्यनन्दत॥
श्रीमान् मनस्वी बलवान् सत्यवागनसूयकः।
सहस्रबाहुर्भूयासमेष मे प्रथमो वरः॥
जरायुजाण्डजं सर्वं सर्वं चैव चराचरम्।
प्रशास्तुमिच्छे धर्मेण द्वितीयस्त्वेष मे वरः॥
पितॄन् देवानृषीन् विप्रान् यजेयं विपुलैर्मखैः।
अमित्रान् निशितैर्बाणैर्घातयेयं रणाजिरे॥
दत्तात्रेयेह भगवंस्तृतीयो वर एष मे।
यस्य नासीन्न भविता न चास्ति सदृशः पुमान्।
इह वा दिवि वा लोके स मे हन्ता भवेदिति॥
सोऽर्जुनः कृतवीर्यस्य वरः पुत्रोऽभवद् युधि।
स सहस्रं सहस्राणां माहिष्मत्यामवर्धत॥
पृथिवीमखिलां जित्वा द्वीपांश्चापि समुद्रिणः।
नभसीव ज्वलन् सूर्यः पुण्यैः कर्मभिरर्जुनः॥
इन्द्रद्वीपं कशेरुं च ताम्रद्वीपं गभस्तिमत्।
गान्धर्वं वारुणं द्वीपं सौम्याक्षमिति च प्रभुः॥
पूर्वैरजितपूर्वांश्च द्वीपानजयदर्जुनः॥
सौवर्णं सर्वमप्यासीद् विमानवरमुत्तमम्।
चतुर्धा व्यभजद् राष्ट्रं तद् विभज्यान्वपालयत्॥
एकांशेनाहरत् सेनामेकांशेनावसद् गृहान्।
यस्तु तस्य तृतीयांशो राजाऽऽसीज्जनसंग्रहे॥
आप्तः परमकल्याणस्तेन यज्ञानकल्पयत्॥

ये दस्यवो ग्रामचरा अरण्ये च वसन्ति ये।
चतुर्थेन च सोंऽशेन तान् सर्वान् प्रत्यषेधयत्॥
सर्वेभ्यश्चान्तवासिभ्यः कार्तवीर्योऽहरद् बलिम्।
आहृतं स्वबलैर्यत् तदर्जुनश्चाभिमन्यते॥
काको वा मूषिको वापि तं तमेव न्यबर्हयत्।
द्वाराणि नापिधीयन्ते राष्ट्रेषु नगरेषु च॥
स एव राष्ट्रपालोऽभूत् स्त्रीपालोऽभवदर्जुनः।
स एवासीदजापालः स गोपालो विशाम्पते॥
स ह्यारण्ये मनुष्याणां राजा क्षेत्राणि रक्षति।
इदं तु कार्तवीर्यस्य बभूवासदृशं जनैः॥
न पूर्वे नापरे तस्य गमिष्यन्ति गतिं नृपाः।
यदर्णवे प्रयातस्य वस्त्रं न परिषिच्यते॥
शतं वर्षसहस्राणामनुशिष्यार्जुनो महीम्।
दत्तात्रेयप्रसादेन एवं राज्यं चकार सः॥
एवं बहूनि कर्माणि चक्रे लोकहिताय सः।
दत्तात्रेय इति ख्यातः प्रादुर्भावस्तु वैष्णवः॥
कथितो भरतश्रेष्ठ शृणु भूयो महात्मनः॥
यदा भृगुकुले जन्म यदर्थं च महात्मनः।
जामदग्न्य इति ख्यातः प्रादुर्भावस्तु वैष्णवः॥
जमदग्निसुतो राजन् रामो नाम स वीर्यवान्।
हैहयान्तकरो राजन् स रामो बलिनां वरः॥
कार्तवीर्यो महावीर्यो बलेनाप्रतिमस्तथा।
रामेण जामदग्न्येन हतो विषममाचरन्॥
तं कार्तवीर्यं राजानं हैहयानामरिंदमम्।
रथस्थं पार्थिवं रामः पातयित्वावधीद् रणे॥
जम्भस्य मूर्ध्नि भेत्ता च हन्ता च शतदुन्दुभेः।
स एष कृष्णो गोविन्दो जातो भृगुषु वीर्यवान्॥
सहस्रबाहुमुद्धर्तुं सहस्रजितमाहवे॥
क्षत्रियाणां चतुष्षष्टिमयुतानां महायशाः।
सरस्वत्यां समेतानि एष वै धनुषाजयत्॥
ब्रह्मद्विषां वधे तस्मिन् सहस्राणि चतुर्दश।
पुनर्जग्राह शूराणामन्तं चक्रे नरर्षभः॥
ततो दशसहस्रस्य हन्ता पूर्वमरिंदमः।
सहस्रं मुसलेनाहन् सहस्रमुदकृन्तत॥
चतुर्दश सहस्राणि क्षणमात्रमपातयत्।
शिष्टान् ब्रह्मद्विषश्छित्त्वा ततोऽस्नायत भार्गवः॥
राम रामेत्यभिक्रुष्टो ब्राह्मणैः क्षत्रियार्दितैः।
न्यघ्नद् दशसहस्राणि रामः परशुनाभिभूः॥
न ह्यमृष्यत तां वाचमार्तैर्भृशमुदीरिताम्।
भृगो रामाभिधावेति यदाक्रन्दन् द्विजातयः॥
काश्मीरान् दरदान् कुन्तीन् क्षुद्रकान् मालवाञ्छकान्।
चेदिकाशिकरूषांश्च ऋषिकान् क्रथकैशिकान्॥

अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोसलान्।
रात्रायणान् वीतिहोत्रान् किरातान् मार्तिकावतान् ॥
एतानन्यांश्च राजेन्द्रान् देशे देशे सहस्रशः।
निकृत्य निशितैर्बाणैः सम्प्रदाय विवस्वते ॥
कीर्णा क्षत्रियकोटीभिः मेरुमन्दरभूषणा।
त्रिःसप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता ॥
एवमिष्ट्वा महाबाहुः क्रतुभिर्भूरिदक्षिणैः।
अन्यद् वर्षशतं रामः सौभे शाल्वमयोधयत् ॥
ततः स भृगुशार्दूलस्तं सौभं योधयन् प्रभुः।
सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ ॥
नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत्।
राम राम महाबाहो भृगूणां कीर्तिवर्धन ॥
त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि।
चक्रहस्तो गदापाणिर्भीतानामभयंकरः ॥
युधि प्रद्युम्नसाम्बाभ्यां कृष्णः सौभं वधिष्यति।
तच्छ्रुत्वा पुरुषव्याघ्रस्तत एव वनं ययौ ॥
न्यस्य सर्वाणि शस्त्राणि कालकाङ्क्षी महायशाः ॥
रथं वर्मायुधं चैव शरान् परशुमेव च।
धनूंष्यप्सु प्रतिष्ठाप्य राजंस्तेपे परं तपः ॥
ह्रियं प्रज्ञां श्रियं कीर्तिं लक्ष्मीं चामित्रकर्शनः।
पञ्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह ॥
आदिकाले प्रवृत्तं हि विभजन् कालमीश्वरः।
नाहनच्छ्रद्धया सौभं न ह्यशक्तो महायशाः ॥
जामदग्न्य इति ख्यातो यस्त्वसौ भगवानृषिः।
सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः ॥
शृणु राजंस्तथा विष्णोः प्रादुर्भावं महात्मनः।
चतुर्विंशे युगे चापि विश्वामित्रपुरःसरः ॥
तिथौ नावमिके जज्ञे तथा दशरथादपि।
कृत्वाऽऽत्मानं महाबाहुश्चतुर्धा विष्णुरव्ययः ॥
लोके राम इति ख्यातस्तेजसा भास्करोपमः।
प्रसादनार्थं लोकस्य विष्णुस्तस्य सनातनः ॥
धर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः।
तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ॥
यज्ञविघ्नं तदा कृत्वा विश्वामित्रस्य भारत।
सुबाहुर्निहतस्तेन मारीचस्ताडितो भृशम् ॥
तस्मै दत्तानि शस्त्राणि विश्वामित्रेण धीमता।
वधार्थं देवशत्रूणां दुर्वाराणि सुरैरपि ॥
वर्तमाने तदा यज्ञे जनकस्य महात्मनः।
भग्नं माहेश्वरं चापं क्रीडता लीलया परम् ॥
ततो विवाहं सीतायाः कृत्वा स रघुवल्लभः।
नगरीं पुनरासाद्य मुमुदे तत्र सीतया ॥
कस्यचित् त्वथ कालस्य पित्रा तत्राभिचोदितः।
कैकेय्याः प्रियमन्विच्छन् वनमभ्यवपद्यत ॥
यः समाः सर्वधर्मज्ञश्चतुर्दश वने वसन्।
लक्ष्मणानुचरो रामः सर्वभूतहिते रतः ॥
चतुर्दश वने तप्त्वा तपो वर्षाणि भारत।
रूपिणी यस्य पार्श्वस्था सीतेत्यभिहिता जनैः ॥
पूर्वोचितत्वात् सा लक्ष्मीर्भर्तारमनुगच्छति।
जनस्थाने वसन् कार्यं त्रिदशानां चकार सः ॥
मारीचं दूषणं हत्वा खरं त्रिशिरसं तथा।
चतुर्दश सहस्राणि रक्षसां घोरकर्मणाम् ॥
जघान रामो धर्मात्मा प्रजानां हितकाम्यया।
विराधं च कबन्धं च राक्षसौ क्रूरकर्मिणौ ॥
जघान च तदा रामो गन्धर्वौ शापविक्षतौ ॥
स रावणस्य भगिनीनासाच्छेदं चकार ह।
भार्यावियोगं तं प्राप्य मृगयन् व्यचरद् वनम् ॥
ततस्तमृष्यमूकं स गत्वा पम्पामतीत्य च।
सुग्रीवं मारुतिं दृष्ट्वा चक्रे मैत्रीं तयोः स वै ॥
अथ गत्वा स किष्किन्धां सुग्रीवेण तदा सह।
निहत्य वालिनं युद्धे वानरेन्द्रं महाबलम् ॥
अभ्यषिञ्चत् तदा रामः सुग्रीवं वानरेश्वरम् ॥
ततः स वीर्यवान् राजंस्त्वरयन् वै समुत्सुकः।
विचित्य वायुपुत्रेण लङ्कादेशं निवेदितम् ॥
सेतुं बद्ध्वा समुद्रस्य वानरैः सहितस्तदा।
सीतायाः पदमन्विच्छन् रामो लङ्कां विवेश ह ॥
देवोरगगणानां हि यक्षराक्षसपक्षिणाम्।
तत्रावध्यं राक्षसेन्द्रं रावणं युधि दुर्जयम् ॥
युक्तं राक्षसकोटीभिर्भिन्नाञ्जनचयोपमम्।
दुर्निरीक्ष्यं सुरगणैर्वरदानेन दर्पितम् ॥
जघान सचिवैः सार्धं सान्वयं रावणं रणे।
त्रैलोक्यकण्टकं वीरं महाकायं महाबलम् ॥
रावणं सगणं हत्वा रामो भूतपतिः पुरा ॥
लङ्कायां तं महात्मानं राक्षसेन्द्रं विभीषणम्।
अभिषिच्य च तत्रैव अमरत्वं ददौ तदा ॥
आरुह्य पुष्पकं रामः सीतामादाय पाण्डव।
सबलः स्वपुरं गत्वा धर्मराज्यमपालयत् ॥
दानवो लवणो नाम मधोः पुत्रो महाबलः।
शत्रुघ्नेन हतो राजंस्ततो रामस्य शासनात् ॥
एवं बहूनि कर्माणि कृत्वा लोकहिताय सः।
राज्यं चकार विधिवद् रामो धर्मभृतां वरः ॥
दशाश्वमेधानाजह्रे जारुधिस्थान् निरर्गलान् ॥
नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा।
न वित्तजं भयं चासीद् रामे राज्यं प्रशासति ॥
प्राणिनां च भयं नासीज्जलानलविधानजम्।
पर्यदेवन्न विधवा नानाथाः काश्चनाभवन् ॥
सर्वमासीत् तदा तृप्तं रामे राज्यं प्रशासति ॥

न संकरकरा वर्णा नाकृष्टकरकृज्जनः ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥
विशः पर्यचरन् क्षत्रं क्षत्रं नापीडयद् विशः ।
नरा नात्यचरन् भार्या भार्या नात्यचरन् पतीन् ॥
नासीदल्पकृषिर्लोके रामे राज्यं प्रशासति ।
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
अरोगाः प्राणिनोऽप्यासन् रामे राज्यं प्रशासति ॥
ऋषीणां देवतानां च मनुष्याणां तथैव च ।
पृथिव्यां सहवासोऽभूद् रामे राज्यं प्रशासति ॥
सर्वे ह्यासंस्तृप्तरूपास्तदा तस्मिन् विशाम्पते ।
धर्मेण पृथिवीं सर्वामनुशासति भूमिपे ॥
तपस्येवाभवन् सर्वे सर्वे धर्ममनुव्रताः ।
पृथिव्यां धार्मिके तस्मिन् रामे राज्यं प्रशासति ॥
नाधर्मिष्ठो नरः कश्चिद् बभूव प्राणिनां क्वचित् ।
प्राणापानौ समावास्तां रामे राज्यं प्रशासति ॥
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः ॥
आजानुबाहुः सुमुखः सिंहस्कन्धो महाबलः ।
दश वर्षसहस्राणि दश वर्षशतानि च ॥
राज्यं भोगं च सम्प्राप्य शशास पृथिवीमिमाम् ।
रामो रामो राम इति प्रजानामभवन् कथाः ॥
रामभूतं जगदिदं रामे राज्यं प्रशासति ।
ऋग्यजुःसामहीनाश्च न तदासन् द्विजातयः ॥
उषित्वा दण्डके कार्यं त्रिदशानां चकार सः ।
पूर्वापकारिणं संख्ये पौलस्त्यं मनुजर्षभः ॥
देवगन्धर्वनागानामरिं स निजघान ह ।
सत्त्ववान् गुणसम्पन्नो दीप्यमानः स्वतेजसा ॥
एवमेव महाबाहुरिक्ष्वाकुकुलवर्धनः ॥
रावणं सगणं हत्वा दिवमाक्रमताभिभूः ।
इति दाशरथेः ख्यातः प्रादुर्भावो महात्मनः ॥
ततः कृष्णो महाबाहुर्भीतानामभयङ्करः ।
अष्टाविंशे युगे राजञ्जज्ञे श्रीवत्सलक्षणः ॥
पेशलश्च वदान्यश्च लोके बहुमतो नृषु ।
स्मृतिमान् देशकालज्ञः शङ्खचक्रगदासिधृक् ॥
वासुदेव इति ख्यातो लोकानां हितकृत् सदा ।
वृष्णीनां च कुले जातो भूमेः प्रियचिकीर्षया ॥
स नृणामभयं दाता मधुहेति स विश्रुतः ।
शकटार्जुनरामाणां किल स्थानान्यसूदयत् ॥
कंसादीन् निजघानाजौ दैत्यान् मानुषविग्रहान् ।
अयं लोकहितार्थाय प्रादुर्भावो महात्मनः ॥
कल्की विष्णुयशा नाम भूयश्चोत्पत्स्यते हरिः ।
कलेर्युगान्ते सम्प्राप्ते धर्मे शिथिलतां गते ॥
पाखण्डिनां गणानां हि वधार्थं भरतर्षभः ।
धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया ॥
एते चान्ये च बहवो दिव्या देवगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ॥

( दाक्षिणात्यग्रन्थेऽध्यायसमाप्तिः )

[ श्रीकृष्णस्य प्राकट्यं श्रीकृष्णबलरामयो-
बलिलीलानां वर्णनं च ]

*वैशम्पायन उवाच*

एवमुक्तोऽथ कौन्तेयस्ततः पौरवनन्दनः ।
आबभाषे पुनर्भीष्मं धर्मराजो युधिष्ठिरः ॥

*युधिष्ठिर उवाच*

भूय एव मनुष्येन्द्र उपेन्द्रस्य यशस्विनः ।
जन्म वृष्णिषु विज्ञातुमिच्छामि वदतां वर ॥
यथैव भगवाञ्जातः क्षिताविह जनार्दनः ।
माधवेषु महाबुद्धिस्तन्मे ब्रूहि पितामह ॥
यदर्थं च महातेजा गास्तु गोवृषभेक्षणः ।
ररक्ष कंसस्य वधाल्लोकानामभिरक्षिता ॥
क्रीडता चैव यद् बाल्ये गोविन्देन विचेष्टितम् ।
तदा मतिमतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥

*वैशम्पायन उवाच*

एवमुक्तस्ततो भीष्मः केशवस्य महात्मनः ।
माधवेषु तदा जन्म कथयामास वीर्यवान् ॥

*भीष्म उवाच*

हन्त ते कथयिष्यामि युधिष्ठिर यथातथम् ।
यतो नारायणस्येह जन्म वृष्णिषु कौरव ॥
अजातशत्रो जातस्तु यथैष भुवि भूमिपः ।
कीर्त्यमानं मया तात निबोध भरतर्षभ ॥
सागराः समकम्पन्त मुदा चेलुश्च पर्वताः ।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने ॥
शिवाः सम्प्रववुर्वाताः प्रशान्तमभवद् रजः ।
ज्योतींषि सम्प्रकाशन्ते जायमाने जनार्दने ॥
देवदुन्दुभयश्चापि सस्वनुर्भृशमम्बरे ।
अभ्यवर्षंस्तदाऽऽगम्य देवताः पुष्पवृष्टिभिः ॥
गीर्भिर्मङ्गलयुक्ताभिरस्तुवन् मधुसूदनम् ।
उपतस्थुस्तदा प्रीताः प्रादुर्भावे महर्षयः ॥
ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् ।
उपानृत्यन्नुपजगुर्गन्धर्वाप्सरसां गणाः ॥
उपतस्थे च गोविन्दं सहस्राक्षः शचीपतिः ।
अभ्यभाषत तेजस्वी महर्षीन् पूजयंस्तदा ॥

*इन्द्र उवाच*

कृत्यानि देवकार्याणि कृत्वा लोकहिताय च ।
स्वलोकं लोककृद् देव पुनर्गच्छ स्वतेजसा ॥

*भीष्म उवाच*

इत्युक्त्वा मुनिभिः सार्धं जगाम त्रिदिवेश्वरः ।
वसुदेवस्ततो जातं बालमादित्यसंनिभम् ।
नन्दगोपकुले राजन् भयात् प्राच्छादयद्धरिम् ॥
नन्दगोपकुले कृष्ण उवास बहुलाः समाः ।
ततः कदाचित् सुप्तं तं शकटस्य त्वधः शिशुम् ॥
यशोदा सम्परित्यज्य जगाम यमुनां नदीम् ।
शिशुलीलां ततः कुर्वन् स्वहस्तचरणौ क्षिपन् ॥
रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ।
पादाङ्गुष्ठेन शकटं धारयन्नथ केशवः ॥
तत्राथैकेन पादेन पातयित्वा तथा शिशुः ।
न्युब्जः पयोधराकाङ्क्षी चकार च रुरोद च ॥
पातितं शकटं दृष्ट्वा भिन्नभाण्डघटीघटम् ।
जनास्ते शिशुना तेन विस्मयं परमं ययुः ॥
प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् ।
पूतना चापि निहता महाकाया महास्तनी ॥
पश्यतां सर्वदेवानां वासुदेवेन भारत ।
ततः काले महाराज संसक्तौ रामकेशवौ ॥
विष्णुः सङ्कर्षणश्चोभौ रिङ्गिणौ समपद्यताम् ।
अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे ॥
विसर्पयेतां सर्वत्र सर्पभोगभुजौ तदा ।
रेजतुः पांसुदिग्धाङ्गौ रामकृष्णौ तदा नृप ॥
क्वचिच्च जानुभिर्घृष्टौ क्रीडमानौ क्वचिद् वने ।
पिबन्तौ दधिकुल्याश्च मथ्यमाने च भारत ॥
ततः स बालो गोविन्दो नवनीतं तदा क्षये ।
ग्रसमानस्तु तत्रायं गोपीभिर्ददृशेऽथ वै ॥
दाम्नाथोलूखले कृष्णो गोपस्त्रीभिश्च बन्धितः ।
तदाथ शिशुना तेन राजंस्तावर्जुनावुभौ ॥
समूलविटपौ भग्नौ तदद्भुतमिवाभवत् ।
तत्रासुरौ महाकायौ गतप्राणौ बभूवतुः ॥
ततस्तौ बाल्यमुत्तीर्णौ कृष्णसङ्कर्षणावुभौ ।
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ॥
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ।
बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ॥
पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ।
शुशुभाते वनगतावुदीर्णाविव पन्नगौ ॥
मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ।
वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ॥
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ।
शिक्यतुम्बधरौ वीरौ गोपवेणुप्रवादकौ ॥
क्वचिद् वसन्तावन्योन्यं क्रीडमानौ क्वचिद् वने ।
पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ ॥
तौ वत्सान् पालयन्तौ हि शोभयन्तौ महद् वनम् ।
चञ्चूर्यन्तौ रमन्तौ स्म राजन्नेवं तदा शुभौ ॥
ततो वृन्दावनं गत्वा वसुदेवसुतावुभौ ।
गोव्रजं तत्र कौन्तेय चारयन्तौ विजह्रतुः ॥

( दाक्षिणात्यग्रन्थेऽत्राध्यायसमाप्तिः )

[ कालियमर्दनधेनुकासुरारिष्टासुरकंसप्रभृतीनां वधः, श्रीकृष्ण-बलरामयोर्विद्याभ्यासः, गुरुदक्षिणारूपतया गुरवे तदीयं मृतं पुत्रमुज्जीव्य समर्पणं च ]

*भीष्म उवाच*

ततः कदाचिद् गोविन्दो ज्येष्ठं सङ्कर्षणं विना ।
चचार तद् वनं रम्यं रम्यरूपो वराननः ॥
काकपक्षधरः श्रीमाञ्छ्यामः पद्मनिभेक्षणः ।
श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ॥
रज्जुयज्ञोपवीती स पीताम्बरधरो युवा ।
श्वेतगन्धेन लिप्ताङ्गो नीलकुञ्चितमूर्धजः ॥
राजता बर्हिपत्रेण मन्दमारुतकम्पिना ।
क्वचिद् गायन् क्वचित् क्रीडन् क्वचिन्नृत्यन् क्वचिद्धसन् ।
गोपवेषः स मधुरं गायन् वेणुं च वादयन् ।
प्रह्लादनार्थं तु गवां क्वचिद् वनगतो युवा ॥
गोकुले मेघकाले तु चचार द्युतिमान् प्रभुः ।
बहुरम्येषु देशेषु वनस्य वनराजिषु ॥
तासु कृष्णो मुदं लेभे क्रीडया भरतर्षभ ।
स कदाचिद् वने तस्मिन् गोभिः सह परिव्रजन् ॥
भाण्डीरं नाम दृष्ट्वाथ न्यग्रोधं केशवो महान् ।
तच्छायायां निवासाय मतिं चक्रे तदा प्रभुः ॥
स तत्र वयसा तुल्यैः वत्सपालैः सहानघ ।
रेमे स दिवसान् कृष्णः पुरा स्वर्गपुरे तथा ॥
तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनः ।
रमयन्ति स्म बहवो मान्यैः क्रीडनकैस्तदा ॥
अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ।
गोपालाः कृष्णमेवान्ये गायन्ति स्म वनप्रियाः ॥
तेषां संगायतामेव वादयामास केशवः ।
पर्णवाद्यान्तरे वेणुं तुम्बं वीणां च तत्र वै ॥
एवं क्रीडान्तरैः कृष्णो गोपालैर्विजहार सः ।
तेन बालेन कौन्तेय कृतं लोकहितं तदा ॥
पश्यतां सर्वभूतानां वासुदेवेन भारत ।
ह्रदे नीपवने तत्र क्रीडितं नागमूर्धनि ॥
कालियं शासयित्वा तु सर्वलोकस्य पश्यतः ।
विजहार ततः कृष्णो बलदेवसहायवान् ॥
धेनुको दारुणो दैत्यो राजन् रासभविग्रहः ।
तदा तालवने राजन् बलदेवेन वै हतः ॥
ततः कदाचित् कौन्तेय रामकृष्णौ वनं गतौ ।
चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ॥

विहरन्तौ मुदा युक्तौ वीक्षमाणौ वनानि वै ।
क्ष्वेलयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ॥
नामभिर्व्याहरन्तौ च वत्सान् गाश्च परंतपौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ॥
तौ देवौ मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥
ततः कृष्णो महातेजास्तदा गत्वा तु गोव्रजम् ।
गिरियज्ञं तमेवैष प्रकृतं गोपदारकैः ॥
बुभुजे पायसं शौरिरीश्वरः सर्वभूतकृत् ।
तं दृष्ट्वा गोपकाः सर्वे कृष्णमेव समर्चयन् ॥
पूज्यमानस्ततो गोपैर्दिव्यं वपुरधारयत् ।
धृतो गोवर्धनो नाम सप्ताहं पर्वतस्तदा ॥
शिशुना वासुदेवेन गवार्थमरिमर्दन ।
क्रीडमानस्तदा कृष्णः कृतवान् कर्म दुष्करम् ॥
तदद्भुतमिवात्रासीत् सर्वलोकस्य भारत ।
देवदेवः क्षितिं गत्वा कृष्णं दृष्ट्वा मुदान्वितः ॥
गोविन्द इति तं ह्युक्त्वा ह्यभ्यषिञ्चत् पुरंदरः ।
इत्युक्त्वाऽऽश्लिष्य गोविन्दं पुरुहूतोऽभ्ययाद् दिवम् ।
अथारिष्ट इति ख्यातं दैत्यं वृषभविग्रहम् ।
जघान तरसा कृष्णः पशूनां हितकाम्यया ॥
केशिनं नाम दैतेयं राजन् वै हयविग्रहम् ।
तथा वनगतं पार्थ गजायुतबलं हयम् ॥
प्रहितं भोजपुत्रेण जघान पुरुषोत्तमः ।
आन्ध्रं मल्लं च चाणूरं निजघान महासुरम् ॥
सुनामानममित्रघ्नं सर्वसैन्यपुरस्कृतम् ।
बालरूपेण गोविन्दो निजघान च भारत ॥
बलदेवेन चायत्तः समाजे मुष्टिको हतः ।
त्रासितश्च तदा कंसः स हि कृष्णेन भारत ॥
ऐरावतं युयुत्सन्तं मातङ्गानामिवर्षभम् ।
कृष्णः कुवलयापीडं हतवांस्तस्य पश्यतः ॥
हत्वा कंसममित्रघ्नः सर्वेषां पश्यतां तदा ।
अभिषिच्योग्रसेनं तं पित्रोः पादमवन्दत ॥
एवमादीनि कर्माणि कृतवान् वै जनार्दनः ।
उवास कतिचित् तत्र दिनानि सहलायुधः ॥
ततस्तौ जग्मतुस्तात गुरुं सान्दीपनिं पुनः ।
गुरुशुश्रूषया युक्तौ धर्मज्ञौ धर्मचारिणौ ॥
व्रतमुग्रं महात्मानौ विचरन्तावतिष्ठताम् ।
अहोरात्रचतुष्षष्ट्या षडङ्गं वेदमापतुः ॥
लेख्यं च गणितं चोभौ प्राप्नुतां यदुनन्दनौ ।
गान्धर्ववेदं वैद्यं च सकलं समवापतुः ॥
हस्तिशिक्षामश्वशिक्षां द्वादशाहेन चापतुः ।
तावुभौ जग्मतुर्वीरौ गुरुं सान्दीपनिं पुनः ॥
धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ।
ताविष्वस्त्रवराचार्यमभिगम्य प्रणम्य च ॥
तेन तौ सत्कृतौ राजन् विचरन्ताववन्तिषु ।
पञ्चाशद्भिरहोरात्रैर्दशाङ्गं सुप्रतिष्ठितम् ॥
सरहस्यं धनुर्वेदं सकलं ताववापतुः ।
दृष्ट्वा कृतास्त्रौ विप्रेन्द्रो गुर्वर्थे तावचोदयत् ॥
अयाचतार्थं गोविन्दं ततः सान्दीपनिर्विभुः ।

*सान्दीपनिरुवाच*

मम पुत्रः समुद्रेऽस्मिंस्तिमिना चापवाहितः ॥
पुत्रमानय भद्रं ते भक्षितं तिमिना मम ।

*भीष्म उवाच*

आर्ताय गुरवे तत्र प्रतिशुश्राव दुष्करम् ॥
अशक्यं त्रिषु लोकेषु कर्तुमन्येन केनचित् ।
यश्च सान्दीपनेः पुत्रं जघान भरतर्षभ ॥
सोऽसुरः समरे ताभ्यां समुद्रे विनिपातितः ।
ततः सान्दीपनेः पुत्रः प्रसादादमितौजसः ॥
दीर्घकालं गतः प्रेतं पुनरासीच्छरीरवान् ।
तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ॥
सर्वेषामेव भूतानां विस्मयः समजायत ।
ऐश्वर्याणि च सर्वाणि गवाश्वं च धनानि च ॥
सर्वं तदुपजह्राते गुरवे रामकेशवौ ।
ततस्तं पुत्रमादाय ददौ च गुरवे प्रभुः ॥
तं दृष्ट्वा पुत्रमायान्तं सान्दीपनिपुरे जनाः ।
अशक्यमेतत् सर्वेषामचिन्त्यमिति मेनिरे ॥
कश्च नारायणादन्यश्चिन्तयेदिदमद्भुतम् ।
गदापरिघयुद्धेषु सर्वास्त्रेषु च केशवः ॥
परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।
भोजराजतनूजोऽपि कंसस्तात युधिष्ठिर ॥
अस्त्रज्ञाने बले वीर्ये कार्तवीर्यसमोऽभवत् ।
तस्य भोजपतेः पुत्राद् भोजराज्यविवर्धनात् ॥
उद्विजन्ते स्म राजानः सुपर्णादिव पन्नगाः ।
चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ॥
शतं शतसहस्राणि पादातास्तस्य भारत ।
अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ॥
अभवन् भोजराजस्य जाम्बूनदमयध्वजाः ।
स्फुरत्काञ्चनकक्ष्यास्तु गजास्तस्य युधिष्ठिर ॥
तावन्त्येव सहस्राणि गजानामनिवर्तिनाम् ।
ते च पर्वतसङ्काशाश्चित्रध्वजपताकिनः ॥
बभूवुर्भोजराजस्य नित्यं प्रमुदिता गजाः ।
स्वलङ्कृतानां शीघ्राणां करेणूनां युधिष्ठिर ।
अभवद् भोजराजस्य द्विस्तावद्धि महद् बलम् ॥
षोडशाश्वसहस्राणि किंशुकाभानि तस्य वै ।
अपरस्तु महाव्यूहः किशोराणां युधिष्ठिर ॥

आरोहवरसम्पन्नो दुर्धर्षः केनचिद् बलात् ।
स च षोडशसाहस्रः कंसभ्रातृपुरस्सरः ॥
सुनामा सदृशस्तेन स कंसं पर्यपालयत् ।
य आसन् सर्ववर्णास्तु हयास्तस्य युधिष्ठिर ॥
स गणो मिश्रको नाम षष्टिसाहस्र उच्यते ।
कंसरोषमहावेगां ध्वजानूपमहाद्रुमाम् ॥
मत्तद्विपमहाग्राहां वैवस्वतवशानुगाम् ।
शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ॥
गदापरिघपाठीनां नानाकवचशैवलाम् ।
रथनागमहावर्तां नानारुधिरकर्दमाम् ॥
चित्रकार्मुककल्लोलां रथाश्वकलिलह्रदाम् ।
महामृधनदीं घोरां योधावर्तननिःस्वनाम् ॥
को वा नारायणादन्यः कंसहन्ता युधिष्ठिर ।
एष शक्ररथे तिष्ठंस्तान्यनीकानि भारत ॥
व्यधमद् भोजपुत्रस्य महाभ्राणीव मारुतः ।
तं सभास्थं सहामात्यं हत्वा कंसं सहान्वयम् ॥
मानयामास मानार्हां देवकीं ससुहृद्गणाम् ।
यशोदां रोहिणीं चैव अभिवाद्य पुनः पुनः ॥
उग्रसेनं च राजानमभिषिच्य जनार्दनः ।
अर्चितो यदुमुख्यैश्च भगवान् वासवानुजः ॥
ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासंधमजयत् पुरुषोत्तमः ॥

( दाक्षिणात्यग्रन्थेऽध्यायसमाप्तिः )

[ ससैन्यस्य नरकस्य वधः, श्रीकृष्णद्वारा देवानां षोडशसहस्रकन्याः पत्नीत्वेन स्वीकृत्य द्वारकायां प्रेषणमिन्द्रलोके गत्वादित्यै कुण्डलं समर्प्य द्वारकायां प्रत्यागमनं च ]

*भीष्म उवाच*

शूरसेनपुरं त्यक्त्वा सर्वयादवनन्दनः ।
द्वारकां भगवान् कृष्णः प्रत्यपद्यत केशवः ॥
प्रत्यपद्यत यानानि रत्नानि च बहूनि च ।
यथार्हं पुण्डरीकाक्षो नैर्ऋतान् प्रतिपालयन् ॥
तत्र विघ्नं चरन्ति स्म दैतेयाः सह दानवैः ।
ताञ्जघान महाबाहुः वरमत्तान् महासुरान् ॥
स विघ्नमकरोत् तत्र नरको नाम नैर्ऋतः ।
त्रासनः सुरसंघानां विदितो वः प्रभावतः ॥
स भूम्यां मूर्तिलिङ्गस्थः सर्वदेवासुरान्तकः ।
मानुषाणामृषीणां च प्रतीपमकरोत् तदा ॥
त्वष्टुर्दुहितरं भौमः कशेरुमगमत् तदा ।
गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीम् ॥
प्रमथ्य च जहारैतां हत्वा च नरकोऽब्रवीत् ।
नष्टशोकभयाबाधः प्राग्ज्योतिषपतिस्तदा ॥

*नरक उवाच*

यानि देवमनुष्येषु रत्नानि विविधानि च ।
बिभर्ति च मही कृत्स्ना सागरेषु च यद् वसु ॥
अद्यप्रभृति तद् देवि सहिताः सर्वनैर्ऋताः ।
तवैवोपहरिष्यन्ति दैत्याश्च सह दानवैः ॥

*भीष्म उवाच*

एवमुत्तमरत्नानि बहूनि विविधानि च ।
स जहार तदा भौमः स्त्रीरत्नानि च भारत ॥
गन्धर्वाणां च याः कन्या जहार नरको बलात् ।
याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ॥
चतुर्दशसहस्राणां चैकविंशच्छतानि च ।
एकवेणीधराः सर्वाः सतां मार्गमनुव्रताः ॥
तासामन्तःपुरं भौमोऽकारयन्मणिपर्वते ।
औदकायामदीनात्मा मुरस्य विषयं प्रति ॥
ताश्च प्राग्ज्योतिषो राजा मुरस्य दश चात्मजाः ।
नैर्ऋताश्च यथा मुख्याः पालयन्त उपासते ॥
स एव तपसां पारे वरदत्तो महीसुतः ।
अदितिं धर्षयामास कुण्डलार्थं युधिष्ठिर ॥
न चासुरगणैः सर्वैः सहितैः कर्म तत् पुरा ।
कृतपूर्वं महाघोरं यदकार्षीन्महासुरः ॥
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरम् ।
विषयान्तपालाश्चत्वारो यस्यासन् युद्धदुर्मदाः ॥
आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।
त्रासनाः सुरसङ्घानां विरूपै राक्षसैः सह ॥
हयग्रीवो निशुम्भश्च घोरः पञ्चजनस्तथा ।
मुरः पुत्रसहस्रैश्च वरदत्तो महासुरः ॥
तद्वधार्थं महाबाहुरेष चक्रगदासिधृक् ।
जातो वृष्णिषु देवक्यां वासुदेवो जनार्दनः ॥
तस्यास्य पुरुषेन्द्रस्य लोकप्रथिततेजसः ।
निवासो द्वारका तात विदितो वः प्रधानतः ॥
अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।
अति वै राजते पृथ्व्यां प्रत्यक्षं ते युधिष्ठिर ॥
तस्मिन् देवपुरप्रख्ये सा सभा वृष्ण्युपाश्रया ।
या दाशार्हीति विख्याता योजनायतविस्तृता ॥
तत्र वृष्ण्यन्धकाः सर्वे रामकृष्णपुरोगमाः ।
लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ॥
तत्रासीनेषु सर्वेषु कदाचिद् भरतर्षभ ।
दिव्यगन्धा ववुर्वाताः कुसुमानां च वृष्टयः ॥
ततः सूर्यसहस्राभस्तेजोराशिर्महाद्भुतः ।
मुहूर्तमन्तरिक्षेऽभूत् ततो भूमौ प्रतिष्ठितः ॥
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः ।
वृतो देवगणैः सर्वैर्वासवः प्रत्यदृश्यत ॥

रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह ।
उत्पत्य सहसा तस्मै नमस्कारमकुर्वत ॥
सोऽवतीर्य गजात् तूर्णं परिष्वज्य जनार्दनम् ।
सस्वजे बलदेवं च राजानं च तमाहुकम् ॥
उद्धवं वसुदेवं च विकद्रुं च महामतिम् ।
प्रद्युम्नसाम्बनिशठाननिरुद्धं ससात्यकिम् ॥
गदं सारणमक्रूरं कृतवर्माणमेव च ।
चारुदेष्णं सुदेष्णं च अन्यानपि यथोचितम् ॥
परिष्वज्य च दृष्ट्वा च भगवान् भूतभावनः ।
वृष्ण्यन्धकमहामात्रान् परिष्वज्याथ वासवः ॥
प्रगृह्य पूजां तैर्दत्तामुवाचावनताननः ।

*इन्द्र उवाच*

अदित्या चोदितः कृष्ण तव मात्राहमागतः ॥
कुण्डलेऽपहृते तात भौमेन नरकेण च ।
निर्देशशब्दवाच्यस्त्वं लोकेऽस्मिन् मधुसूदन ॥
तस्माज्जहि महाभाग भूमिपुत्रं नरेश्वर ।

*भीष्म उवाच*

तमुवाच महाबाहुः प्रीयमाणो जनार्दनः ।
निर्जित्य नरकं भौममाहरिष्यामि कुण्डले ॥
एवमुक्त्वा तु गोविन्दो राममेवाभ्यभाषत ।
प्रद्युम्नमनिरुद्धं च साम्बं चाप्रतिमं बले ॥
एतांश्चोक्त्वा तदा तत्र वासुदेवो महायशाः ।
अथारुह्य सुपर्णं वै शङ्खचक्रगदासिधृक् ॥
ययौ तदा हृषीकेशो देवानां हितकाम्यया ।
तं प्रयान्तममित्रघ्नं देवाः सहपुरन्दराः ॥
पृष्ठतोऽनुययुः प्रीताः स्तुवन्तो विष्णुमच्युतम् ।
सोऽभ्यान् रक्षोगणान् हत्वा नरकस्य महासुरान् ॥
क्षुरान्तान् मौरवान् पाशान् षट्सहस्रं ददर्श सः ।
संच्छिद्य पाशांस्तवस्त्रेण मुरं हत्वा सहान्वयम् ॥
शिलासङ्घानतिक्रम्य निशुम्भमवपोथयत् ।
यः सहस्रसमस्त्वेकः सर्वान् देवानयोधयत् ॥
तं जघान महावीर्यं हयग्रीवं महाबलम् ।
अपारतेजा दुर्धर्षः सर्वयादवनन्दनः ॥
मध्ये लोहितगङ्गायां भगवान् देवकीसुतः ।
औदकायां विरूपाक्षं जघान भरतर्षभ ॥
पञ्च पञ्चजनान् घोरान् नरकस्य महासुरान् ।
ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ॥
पुरमासादयामास तत्र युद्धमवर्तत ।
महद् दैवासुरं युद्धं यद् वृत्तं भरतर्षभ ॥
युद्धं न स्यात् समं तेन लोकविस्मयकारकम् ।
चक्रलाञ्छनसंछिन्नाः शक्तिखड्गहतास्तदा ॥
निपेतुर्दानवास्तत्र समासाद्य जनार्दनम् ।

अष्टौ शतसहस्राणि दानवानां परंतप ।
निहत्य पुरुषव्याघ्रः पातालविवरं ययौ ॥
त्रासनं सुरसङ्घानां नरकं पुरुषोत्तमः ।
योधयत्यतितेजस्वी मधुवन्मधुसूदनः ॥
तद् युद्धमभवद् घोरं तेन भौमेन भारत ।
कुण्डलार्थे सुरेशस्य नरकेण महात्मना ॥
मुहूर्तं लालयित्वाथ नरकं मधुसूदनः ।
प्रवृत्तचक्रं चक्रेण प्रममाथ बलाद् बली ॥
चक्रप्रमथितं तस्य पपात सहसा भुवि ।
उत्तमाङ्गं हताङ्गस्य वृत्रे वज्रहते यथा ॥
भूमिस्तु पतितं दृष्ट्वा ते वै प्रादाच्च कुण्डले ।
प्रदाय च महाबाहुमिदं वचनमब्रवीत् ॥

*भूमिरुवाच*

सृष्टस्त्वयैव मधुहंस्त्वयैव निहतः प्रभो ।
यथेच्छसि तथा क्रीडन् प्रजास्तस्यानुपालय ॥

*श्रीभगवानुवाच*

देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
उद्वेजनीयो भूतानां ब्रह्मद्विट् पुरुषाधमः ॥
लोकद्विष्टः सुतस्ते तु देवारिर्लोककण्टकः ।
सर्वलोकनमस्कार्यामदितिं बाधते बली ॥
कुण्डले दर्पसम्पूर्णस्ततोऽसौ निहतोऽसुरः ।
नैव मन्युस्त्वया कार्यो यत् कृतं मयि भामिनि ॥
मत्प्रभावाच्च ते पुत्रो लब्धवान् गतिमुत्तमाम् ।
तस्माद् गच्छ महाभागे भारावतरणं कृतम् ॥

*भीष्म उवाच*

निहत्य नरकं भौमं सत्यभामासहायवान् ।
सहितो लोकपालैश्च ददर्श नरकालयम् ॥
अथास्य गृहमासाद्य नरकस्य यशस्विनः ।
ददर्श धनमक्षय्यं रत्नानि विविधानि च ॥
मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
अश्मसारानर्कमणीन् विमलान् स्फाटिकानपि ॥
जाम्बूनदमयान्येव शातकुम्भमयानि च ।
प्रदीप्तज्वलनाभानि शीतरश्मिप्रभाणि च ॥
हिरण्यवर्णं रुचिरं श्वेतमभ्यन्तरं गृहम् ।
यदक्षयं गृहे दृष्टं नरकस्य धनं बहु ॥
न हि राज्ञः कुबेरस्य तावद् धनसमुच्छ्रयः ।
दृष्टपूर्वः पुरा साक्षान्महेन्द्रसदनेष्वपि ॥

*इन्द्र उवाच*

इमानि मणिरत्नानि विविधानि वसूनि च ॥
हेमसूत्रा महाकक्ष्यास्तोमरैर्वीर्यशालिनः।
भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ॥

विमलाभिः पताकाभिर्वासांसि विविधानि च ।
ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः ॥
अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोभिश्चाविकृतैर्यानैः कामं तव जनार्दन ॥
आविकानि च सूक्ष्माणि शयनान्यासनानि च ।
कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ॥
चन्दनागुरुमिश्राणि यानानि विविधानि च ।
एतत् ते प्रापयिष्यामि वृष्ण्यावासमरिंदम ॥

*भीष्म उवाच*

देवगन्धर्वरत्नानि दैतेयासुरजानि च ।
यानि सन्तीह रत्नानि नरकस्य निवेशने ॥
एतत् तु गरुडे सर्वं क्षिप्रमारोप्य वासवः ।
दाशार्हपतिना सार्धमुपायान्मणिपर्वतम् ॥
तत्र पुण्या ववुर्वाताः प्रभाश्चित्राः समुज्ज्वलाः ।
प्रेक्षतां सुरसङ्घानां विस्मयः समपद्यत ॥
त्रिदशा ऋषयश्चैव चन्द्रादित्यौ यथा दिवि ।
प्रभया तस्य शैलस्य निर्विशेषमिवाभवत् ॥
अनुज्ञातस्तु रामेण वासवेन च केशवः ।
प्रीयमाणो महाबाहुर्विवेश मणिपर्वतम् ॥
तत्र वैडूर्यवर्णानि ददर्श मधुसूदनः ।
सतोरणपताकानि द्वाराणि शरणानि च ॥
चित्रग्रथितमेघाभः प्रबभौ मणिपर्वतः ।
हेमचित्रपताकैश्च प्रासादैरुपशोभितः ॥
हर्म्याणि च विशालानि मणिसोपानवन्ति च ।
तत्रस्था वरवर्णाभा ददृशुर्मधुसूदनम् ॥
गन्धर्वसुरमुख्यानां प्रिया दुहितरस्तदा ।
त्रिविष्टपसमे देशे तिष्ठन्तमपराजितम् ॥
परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः ।
सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः ॥
व्रतसंतापजः शोको नात्र काश्चिदपीडयत् ।
अरजांसि च वासांसि बिभ्रत्यः कौशिकान्यपि ॥
समेत्य यदुसिंहस्य चक्रुरस्याञ्जलिं स्त्रियः ।
ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ॥

*कन्यका ऊचुः*

नारदेन समाख्यातमस्माकं पुरुषोत्तम ।
आगमिष्यति गोविन्दः सुरकार्यार्थसिद्धये ॥
सोऽसुरं नरकं हत्वा निशुम्भं मुरमेव च ।
भौमं च सपरीवारं हयग्रीवं च दानवम् ॥
तथा पञ्चजनं चैव प्राप्स्यते धनमक्षयम् ।
सोऽचिरेणैव कालेन युष्मन्मोक्ता भविष्यति ॥
एवमुक्त्वागमद् धीमान् देवर्षिर्नारदस्तथा ।
त्वां चिन्तयानाः सततं तपो घोरमुपास्महे ॥
कालेऽतीते महाबाहुं कदा द्रक्ष्याम माधवम् ।
इत्येवं हृदि संकल्पं कृत्वा पुरुषसत्तम ॥
तपश्चराम सततं रक्ष्यमाणा हि दानवैः ।
गान्धर्वेण विवाहेन विवाहं कुरु नः प्रियम् ॥
ततोऽस्मत्प्रियकामार्थं भगवान् मारुतोऽब्रवीत् ।
यथोक्तं नारदेनाद्य न चिरात् तद् भविष्यति ॥

*भीष्म उवाच*

तासां परमनारीणामृषभाक्षं पुरस्कृतम् ।
ददृशुर्देवगन्धर्वा गृष्टीनामिव गोपतिम् ॥
तस्य चन्द्रोपमं वक्त्रमुदीक्ष्य मुदितेन्द्रियाः ।
सम्प्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ॥

*कन्यका ऊचुः*

सत्यं बत पुरा वायुरिदमस्मानिहाब्रवीत् ।
सर्वभूतकृतज्ञश्च महर्षिरपि नारदः ॥
विष्णुर्नारायणो देवः शङ्खचक्रगदासिधृक् ।
स भौमं नरकं हत्वा भर्ता वो भविता ध्रुवः ॥
दिष्ट्या तस्यर्षिमुख्यस्य नारदस्य महात्मनः ।
वचनं दर्शनादेव सत्यं भवितुमर्हति ॥
यत् प्रियं बत पश्याम वक्त्रं चन्द्रोपमं तु ते ।
दर्शनेन कृतार्थाः स्मो वयमद्य महात्मनः ॥

*भीष्म उवाच*

उवाच स यदुश्रेष्ठः सर्वास्ता जातमन्मथाः ।

*श्रीभगवानुवाच*

यथा ब्रूत विशालाक्ष्यस्तत् सर्वं वो भविष्यति ॥

*भीष्म उवाच*

तानि सर्वाणि रत्नानि गमयित्वाथ किङ्करैः ।
स्त्रियश्च गमयित्वाथ देवतानृपकन्यकाः ॥
वैनतेयभुजे कृष्णो मणिपर्वतमुत्तमम् ।
क्षिप्रमारोपयाञ्चक्रे भगवान् देवकीसुतः ॥
सपक्षिगणमातङ्गं सव्यालमृगपन्नगम् ।
शाखामृगगणैर्जुष्टं सप्रस्तरशिलातलम् ॥
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।
सप्रपातमहासानुं विचित्रशिखिसंकुलम् ॥
तं महेन्द्रानुजः शौरिश्चकार गरुडोपरि ।
पश्यतां सर्वभूतानामुत्पाट्य मणिपर्वतम् ॥
उपेन्द्रं बलदेवं च वासवं च महाबलम् ।
तं च रत्नौघमतुलं पर्वतं च महाबलः ॥
वरुणस्यामृतं दिव्यं छत्रं चन्द्रोपमं शुभम् ।
स्वपक्षबलविक्षेपैर्महाद्रिशिखरोपमः ॥
दिक्षु सर्वासु संरावं स चक्रे गरुडो वहन् ।
आरुजन् पर्वताग्राणि पादपांश्च समुत्क्षिपन् ॥

संजहार महाभ्राणि वैश्वानरपथं गतः ।
ग्रहनक्षत्रताराणां सप्तर्षीणां स्वतेजसा ॥
प्रभाजालमतिक्रम्य चन्द्रसूर्यपथं ययौ ।
मेरोः शिखरमासाद्य मध्यमं मधुसूदनः ॥
देवस्थानानि सर्वाणि ददर्श भरतर्षभ ।
विश्वेषां मरुतां चैव साध्यानां च युधिष्ठिर ॥
भ्राजमानान्यतिक्रम्य अश्विनोश्च परंतप ।
प्राप्य पुण्यतमं स्थानं देवलोकमरिंदमः ॥
शक्रसद्म समासाद्य चावरुह्य जनार्दनः ।
सोऽभिवाद्यादितेः पादावर्चितः सर्वदैवतैः ॥
ब्रह्मदक्षपुरोगैश्च प्रजापतिभिरेव च ।
अदितेः कुण्डले दिव्ये ददावथ तदा विभुः ॥
रत्नानि च परार्ध्याणि रामेण सह केशवः ।
प्रतिगृह्य च तत् सर्वमदितिर्वासवानुजम् ॥
पूजयामास दाशार्हं रामं च विगतज्वरा ।
शची महेन्द्रमहिषी कृष्णस्य महिषीं तदा ॥
सत्यभामां तु संगृह्य अदित्यै वै न्यवेदयत् ।
सा तस्याः सत्यभामायाः कृष्णप्रियचिकीर्षया ॥
वरं प्रादाद् देवमाता सत्यायै विगतज्वरा ।

*अदितिरुवाच*

जरां न यास्यसि वधूर्यावद् वै कृष्णमानुषम् ॥
सर्वगन्धगुणोपेता भविष्यसि वरानने ।

*भीष्म उवाच*

विहृत्य सत्यभामा वै सह शच्या सुमध्यमा ॥
शच्यापि समनुज्ञाता ययौ कृष्णनिवेशनम् ॥
सम्पूज्यमानस्त्रिदशैर्महर्षिगणसेवितः ।
द्वारकां प्रययौ कृष्णो देवलोकादरिंदमः ॥
सोऽतिपत्य महाबाहुर्दीर्घमध्वानमच्युतः ।
वर्धमानपुरद्वारमाससाद पुरोत्तमम् ॥

( दाक्षिणात्यग्रन्थेऽत्राध्यायसमाप्तिः )

[ द्वारकापुर्या रुक्मिणीप्रभृतिपट्टमहिषीणां प्रासादानां च वर्णनम्, बलरामश्रीकृष्णयोर्द्वारकायां प्रवेशश्च ]

*भीष्म उवाच*

तां पुरीं द्वारकां दृष्ट्वा विभुर्नारायणो हरिः ।
हृष्टः सर्वार्थसम्पन्नां प्रवेष्टुमुपचक्रमे ॥
सोऽपश्यद् वृक्षषण्डांश्च रम्यानारामजान् बहून् ।
समन्ततो द्वारवत्यां नानापुष्पफलान्वितान् ॥
अर्कचन्द्रप्रतीकाशैर्मेरुकूटनिभैर्गृहैः ।
द्वारका रचिता रम्यैः सुकृता विश्वकर्मणा ॥
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः ।
गङ्गासिन्धुप्रकाशाभिः परिखाभिरलंकृता ॥
प्राकारेणार्कवर्णेन पाण्डरेण विराजिता ।
वियन्मूर्ध्नि निविष्टेन द्यौरिवाभ्रपरिच्छदा ॥
नन्दनप्रतिमैश्चापि मिश्रकप्रतिमैर्वनैः ।
भाति चैत्ररथं दिव्यं पितामहवनं यथा ॥
वैभ्राजप्रतिमैश्चैव सर्वर्तुकुसुमोत्कटैः ।
भाति तारापरिक्षिप्ता द्वारका द्यौरिवाम्बरे ॥
भाति रैवतकः शैलो रम्यसानुर्महाजिरः ।
पूर्वस्यां दिशि रम्यायां द्वारकायां विभूषणम् ॥
दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते ।
इन्द्रकेतुप्रतीकाशः पश्चिमां दिशमाश्रितः ॥
सुकक्षो राजतः शैलश्चित्रपुष्पमहावनः ।
उत्तरस्यां दिशि तथा वेणुमन्तो विराजते ॥
मन्दराद्रिप्रतीकाशः पाण्डरः पाण्डवर्षभ ।
चित्रकम्बलवर्णाभं पाञ्चजन्यवनं तथा ॥
सर्वर्तुकवनं चैव भाति रैवतकं प्रति ।
लतावेष्टं समन्तात् तु मेरुप्रभवनं महत् ॥
भाति तालवनं चैव पुष्पकं पुण्डरीकवत् ।
सुकक्षं परिवार्यैनं चित्रपुष्पं महावनम् ॥
शतपत्रवनं चैव करवीरकुसुम्भि च ।
भाति चैत्ररथं चैव नन्दनं च महावनम् ॥
रमणं भावनं चैव वेणुमन्तं समन्ततः ।
भाति पुष्करिणी रम्या पूर्वस्यां दिशि भारत ॥
धनुःशतपरीणाहा केशवस्य महात्मनः ॥
महापुरीं द्वारवतीं पञ्चाशद्भिर्मुखैर्युताम् ।
प्रविष्टो द्वारकां रम्यां भासयन्तीं समन्ततः ॥
अप्रमेयां महोत्सेधां महागाधपरिप्लवाम् ।
प्रासादवरसम्पन्नां श्वेतप्रासादशालिनीम् ॥
तीक्ष्णयन्त्रशतघ्नीभिर्यन्त्रजालैः समन्विताम् ।
आयसैश्च महाचक्रैर्ददर्श द्वारकां पुरीम् ॥
अष्टौ रथसहस्राणि प्राकारे किङ्किणीकिनः ।
समुच्छ्रितपताकानि यथा देवपुरे तथा ॥
अष्टयोजनविस्तीर्णामचलां द्वादशायताम् ।
द्विगुणोपनिवेशां च ददर्श द्वारकां पुरीम् ॥
अष्टमार्गां महाकक्ष्यां महाषोडशचत्वराम् ।
एवं मार्गपरिक्षिप्तां साक्षादुशनसा कृताम् ॥
व्यूहानामन्तरा मार्गाः सप्त चैव महापथाः ।
तत्र सा विहिता साक्षान्नगरी विश्वकर्मणा ॥
काञ्चनैर्मणिसोपानैरुपेता जनहर्षिणी ।
गीतघोषमहाघोषैः प्रासादप्रवरैः शुभा ॥
तस्मिन् पुरवरश्रेष्ठे दाशार्हाणां यशस्विनाम् ।
वेश्मानि जहृषे दृष्ट्वा भगवान् पाकशासनः ॥
समुच्छ्रितपताकानि पारिप्लवनिभानि च ।
काञ्चनाभानि भासन्ति मेरुकूटनिभानि च ॥

सुधापाण्डरशृङ्गैश्च शातकुम्भपरिच्छदैः ।
रत्नसानुगुहाशृङ्गैः सर्वरत्नविभूषितैः ॥
सहर्म्यैः सार्धचन्द्रैश्च सनिर्यूहैः सपञ्जरैः ।
सयन्त्रगृहसम्बाधैः सधातुभिरिवाद्रिभिः ॥
मणिकाञ्चनभौमैश्च सुधामृष्टतलैस्तथा ।
जाम्बूनदमयैर्द्वारैर्वैडूर्यविकृतार्गलैः ॥
सर्वर्तुसुखसंस्पर्शैर्महाधनपरिच्छदैः ।
रम्यसानुगुहाशृङ्गैर्विचित्रैरिव पर्वतैः ॥
पञ्चवर्णसुवर्णैश्च पुष्पवृष्टिसमप्रभैः ।
तुल्यपर्जन्यनिर्घोषैर्नानावर्णैरिवाम्बुदैः ॥
महेन्द्रशिखरप्रख्यैर्विहितैर्विश्वकर्मणा ।
आलिखद्भिरिवाकाशमतिचन्द्रार्कभास्वरैः ॥
तैर्दाशार्हमहाभागैर्बभासे भवनह्रदैः ।
चण्डनागाकुलैर्घोरैः ह्रदैर्भोगवती यथा ॥
कृष्णध्वजोपवाह्यैश्च दाशार्हायुधरोहितैः ।
वृष्णिमत्तमयूरैश्च स्त्रीसहस्रप्रभाकुलैः ॥
वासुदेवेन्द्रपर्जन्यैर्गृहमेघैरलङ्कृता ।
ददृशे द्वारकातीव मेघैर्द्यौरिव संवृता ।
साक्षाद् भगवतो वेश्म विहितं विश्वकर्मणा ॥
ददृशुर्देवदेवस्य चतुर्योजनमायतम् ।
तावदेव च विस्तीर्णमप्रमेयं महाधनैः ॥
प्रासादवरसम्पन्नं युक्तं जगति पर्वतैः ।
यं चकार महाबाहुस्त्वष्टा वासवचोदितः ॥
प्रासादं पद्मनाभस्य सर्वतो योजनायतम् ।
मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनायुतम् ।
रुक्मिण्याः प्रवरो वासो विहितः सुमहात्मना ॥
सत्यभामा पुनर्वेश्म सदा वसति पाण्डरम् ।
विचित्रमणिसोपानं यं विदुः शीतवानिति ॥
विमलादित्यवर्णाभिः पताकाभिरलङ्कृतम् ।
व्यक्तबद्धं वनोद्देशे चतुर्दिशि महाध्वजम् ॥
स च प्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभया भूषणैश्चित्रैस्त्रैलोक्यमिव भासयन् ॥
यस्तु पाण्डरवर्णाभस्तयोरन्तरमाश्रितः ।
विश्वकर्माकरोदेनं कैलासशिखरोपमम् ॥
जाम्बूनदप्रदीप्ताग्रः प्रदीप्तज्वलनोपमः ।
सागरप्रतिमोऽतिष्ठन्मेरुरित्यभिविश्रुतः ॥
तस्मिन् गान्धारराजस्य दुहिता कुलशालिनी ।
सुकेशी नाम विख्याता केशवेन निवेशिता ॥
पद्मकूट इति ख्यातः पद्मवर्णो महाप्रभः ।
सुप्रभाया महाबाहो निवासः परमार्चितः ॥
यस्तु सूर्यप्रभो नाम प्रासादवर उच्यते ।
लक्ष्मणायाः कुरुश्रेष्ठ स दत्तः शार्ङ्गधन्वना ॥

वैडूर्यवरवर्णाभः प्रासादो हरितप्रभः ।
यं विदुः सर्वभूतानि हरिरित्येव भारत ।
वासः स मित्रविन्दाया देवर्षिगणपूजितः ॥
महिष्या वासुदेवस्य भूषणं सर्ववेश्मनाम् ।
यस्तु प्रासादमुख्योऽत्र विहितः सर्वशिल्पिभिः ॥
अतीव रम्यः सोऽप्यत्र प्रहसन्निव तिष्ठति ।
सुदत्तायाः सुवासस्तु पूजितः सर्वशिल्पिभिः ॥
महिष्या वासुदेवस्य केतुमानिति विश्रुतः ।
प्रासादो विरजो नाम विरजस्को महात्मनः ॥
उपस्थानगृहं तात केशवस्य महात्मनः ।
यस्तु प्रासादमुख्योऽत्र यं त्वष्टा व्यदधात् स्वयम् ॥
योजनायतविष्कुम्भं सर्वरत्नमयं विभोः ।
तेषां तु विहिताः सर्वे रुक्मदण्डाः पताकिनः ।
सदने वासुदेवस्य मार्गसंजनना ध्वजाः ॥
घण्टाजालानि तत्रैव सर्वेषां च निवेशने ।
आहृत्य यदुसिंहेन वैजयन्त्यचलो महान् ॥
हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरो महत् ।
षष्टितालसमुत्सेधमर्धयोजनविस्तृतम् ॥
सकिन्नरमहानादं तदप्यमिततेजसः ।
पश्यतां सर्वभूतानां त्रिषु लोकेषु विश्रुतम् ॥
आदित्यपथगं यत् तन्मेरोः शिखरमुत्तमम् ।
जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतम् ॥
तदप्युत्पाट्य कृच्छ्रेण स्वं निवेशनमाहृतम् ।
भ्राजमानं पुरा तत्र सर्वौषधिविभूषितम् ॥
यमिन्द्रभवनाच्छौरिराजहार परंतपः ।
पारिजातः स तत्रैव केशवेन निवेशितः ॥
विहिता वासुदेवेन ब्रह्मस्थलमहाद्रुमाः ॥
शालतालाश्वकर्णाश्च शतशाखाश्च रोहिणाः ।
भल्लातककपित्थाश्च चन्द्रवृक्षाश्च चम्पकाः ॥
खर्जूराः केतकाश्चैव समन्तात् परिरोपिताः ।
पद्माकुलजलोपेता रक्ताः सौगन्धिकोत्पलाः ॥
मणिमौक्तिकवालुकाः पुष्करिण्यः सरांसि च ।
तासां परमकूलानि शोभयन्ति महाद्रुमाः ॥
ये च हैमवता वृक्षा ये च नन्दनजास्तथा ।
आहृत्य यदुसिंहेन तेऽपि तत्र निवेशिताः ॥
रक्तपीतारुणप्रख्याः सितपुष्पाश्च पादपाः ।
सर्वर्तुफलपूर्णास्ते तेषु काननसंधिषु ॥
सहस्रपत्रपद्माश्च मन्दराश्च सहस्रशः ।
अशोकाः कर्णिकाराश्च तिलका नागमल्लिकाः ॥
कुरवा नागपुष्पाश्च चम्पकास्तृणगुल्मकाः ।
सप्तपर्णाः कदम्बाश्च नीपाः कुरवकास्तथा ॥
केतक्यः केसराश्चैव हिन्तालतलताटकाः ।
तालाः प्रियङ्गुवकुलाः पिण्डिका बीजपूरकाः ॥

द्राक्षामलकखर्जूरा मृद्वीका जम्बुकास्तथा ।
आम्राः पनसवृक्षाश्च अङ्कोलास्तिलतिन्दुकाः ॥
लिकुचाम्रातकाश्चैव क्षीरिका कण्टकी तथा ।
नालिकेरेङ्गुदाश्चैव उत्क्रोशकवनानि च ॥
वनानि च कदल्याश्च जातिमल्लिकपाटलाः ।
भल्लातककपित्थाश्च तैतभा बन्धुजीवकाः ॥
प्रवालाशोककाश्मर्यः प्राचीनाश्चैव सर्वशः ।
प्रियङ्गुबदरीभिश्च यवैः स्पन्दनचन्दनैः ॥
शमीबिल्वपलाशैश्च पाटलावटपिप्पलैः ।
उदुम्बरैश्च द्विदलैः पालाशैः पारिभद्रकैः ॥
इन्द्रवृक्षार्जुनैश्चैव अश्वत्थैश्चिरिबिल्वकैः ।
सौभञ्जनकवृक्षैश्च भल्लटैरश्वसाह्वयैः ॥
सर्जैस्ताम्बूलवल्लीभिर्लवङ्गैः क्रमुकैस्तथा ।
वंशैश्च विविधैस्तत्र समन्तात् परिरोपितैः ॥
ये च नन्दनजा वृक्षा ये च चैत्ररथे वने ।
सर्वे ते यदुनाथेन समन्तात् परिरोपिताः ॥
कुमुदोत्पलपूर्णाश्च वाप्यः कूपाः सहस्रशः ।
समाकुलमहावाप्यः पीता लोहितवालुकाः ॥
तस्मिन् गृहवने नद्यः प्रसन्नसलिला ह्रदाः ।
फुल्लोत्पलजलोपेता नानाद्रुमसमाकुलाः ॥
तस्मिन् गृहवने नद्यो मणिशर्करवालुकाः ।
मत्तबर्हिणसङ्घाश्च कोकिलाश्च मदोद्वहाः ॥
बभूवुः परमोपेताः सर्वे जगतिपर्वताः ।
तत्रैव गजयूथानि तत्र गोमहिषास्तथा ॥
निवासाश्च कृतास्तत्र वराहमृगपक्षिणाम् ।
विश्वकर्मकृतः शैलः प्राकारस्तस्य वेश्मनः ॥
व्यक्तं किष्कुशतोद्यामः सुधाकरसमप्रभः ।
तेन ते च महाशैलाः सरितश्च सरांसि च ॥
परिक्षिप्तानि हर्म्यस्य वनान्युपवनानि च ।
एवं तच्छिल्पिवर्येण विहितं विश्वकर्मणा ॥
प्रविशन्नेव गोविन्दो ददर्श परितो मुहुः ।
इन्द्रः सहामरैः श्रीमांस्तत्र तत्रावलोकयत् ।
एवमालोकयांचक्रुर्द्वारकामृषभास्त्रयः ।
उपेन्द्रबलदेवौ च वासवश्च महायशाः ॥
ततस्तं पाण्डरं शौरिर्मूर्ध्नि तिष्ठन् गरुत्मतः ॥
प्रीतः शङ्खमुपादध्मौ विद्विषां रोमहर्षणम् ।
तस्य शङ्खस्य शब्देन सागरश्चुक्षुभे भृशम् ॥
ररास च नभः सर्वं तच्चित्रमभवत् तदा ।
पाञ्चजन्यस्य निर्घोषं निशम्य कुकुरान्धकाः ॥
विशोकाः समपद्यन्त गरुडस्य च दर्शनात् ।
शङ्खचक्रगदापाणिं सुपर्णशिरसि स्थितम् ॥
दृष्ट्वा जहृषिरे कृष्णं भास्करोदयतेजसम् ।

ततस्तूर्यप्रणादश्च भेरीणां च महास्वनः ॥
सिंहनादश्च सञ्जज्ञे सर्वेषां पुरवासिनाम् ।
ततस्ते सर्वदाशार्हाः सर्वे च कुकुरान्धकाः ॥
प्रीयमाणाः समाजग्मुरालोक्य मधुसूदनम् ।
वासुदेवं पुरस्कृत्य वेणुशङ्खरवैः सह ॥
उग्रसेनो ययौ राजा वासुदेवनिवेशनम् ।
आनन्दितुं पर्यचरन् स्वेषु वेश्मसु देवकी ॥
रोहिणी च यथोद्देशमाहुकस्य च याः स्त्रियः ।
हता ब्रह्मद्विषः सर्वे जयन्त्यन्धकवृष्णयः ॥
एवमुक्तः स ह स्त्रीभिरीक्षितो मधुसूदनः ।
ततः शौरिः सुपर्णेन स्वं निवेशनमभ्ययात् ॥
चकाराथ यथोद्देशमीश्वरो मणिपर्वतम् ।
ततो धनानि रत्नानि सभायां मधुसूदनः ॥
निधाय पुण्डरीकाक्षः पितुर्दर्शनलालसः ।
ततः सान्दीपनिं पूर्वमुपस्पृष्ट्वा महायशाः ॥
ववन्दे पृथुताम्राक्षः प्रीयमाणो महाभुजः ।
तथाश्रुपरिपूर्णाक्षमानन्दगतचेतसम् ॥
ववन्दे सह रामेण पितरं वासवानुजः ।
रामकृष्णौ समाश्लिष्य सर्वे चान्धकवृष्णयः ॥
तं तु कृष्णः समाहृत्य रत्नौघधनसंचयम् ॥
व्यभजत् सर्ववृष्णिभ्य आदध्वमिति चाब्रवीत् ।
यथाश्रेष्ठमुपागम्य सात्वतान् यदुनन्दनः ॥
सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ।
ततः सर्वाणि वित्तानि सर्वरत्नमयानि च ॥
व्यभजत् तानि तेभ्योऽथ सर्वेभ्यो यदुनन्दनः ।
सा केशवमहामात्रैर्महेन्द्रप्रमुखैः सह ॥
शुशुभे वृष्णिशार्दूलैः सिंहैरिव गिरेर्गुहा ।
अथासनगतान् सर्वानुवाच विबुधाधिपः ॥
शुभया हर्षयन् वाचा महेन्द्रस्तान् महायशाः ।
कुकुरान्धकमुख्यांश्च तं च राजानमाहुकम् ॥

इन्द्र उवाच

यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।
यत् कृतं वासुदेवेन तद् वक्ष्यामि समासतः ॥
अयं शतसहस्राणि दानवानामरिंदमः ।
निहत्य पुण्डरीकाक्षः पातालविवरं ययौ ॥
यच्च नाधिगतं पूर्वैः प्रह्लादबलिशम्बरैः ।
तदिदं शौरिणा वित्तं प्रापितं भवतामिह ॥
सपाशं मुरमाक्रम्य पाञ्चजन्यं च धीमता ।
शिलासङ्घानतिक्रम्य निशुम्भः सगणो हतः ।
हयग्रीवश्च विक्रान्तो निहतो दानवो बली ॥
मथितश्च मृधे भौमः कुण्डले चाहृते पुनः ।
प्राप्तं च दिवि देवेषु केशवेन महद् यशः ॥
वीतशोकभयाबाधाः कृष्णबाहुबलाश्रयाः ।
यजन्तु विविधैः सोमैर्मखैरन्धकवृष्णयः ॥

पुनर्बाणवधे शौरिमादित्या वसुभिः सह ।
मन्मुखा हि गमिष्यन्ति साध्याश्च मधुसूदनम् ॥

*भीष्म उवाच*

एवमुक्त्वा ततः सर्वानामन्त्र्य कुकुरान्धकान् ।
सस्वजे रामकृष्णौ च वसुदेवं च वासवः ॥
प्रद्युम्नसाम्बनिशठाननिरुद्धं च सारणम् ।
बभ्रुं झल्लिं गदं भानुं चारुदेष्णं च वृत्रहा ॥
सत्कृत्य सारणाक्रूरौ पुनराभाष्य सात्यकिम् ।
सस्वजे वृष्णिराजानमाहुकं कुकुराधिपम् ॥
भोजं च कृतवर्माणमन्यांश्चान्धकवृष्णिषु ।
आमन्त्र्य देवप्रवरो वासवो वासवानुजम् ॥
ततः श्वेताचलप्रख्यं गजमैरावतं प्रभुः ।
पश्यतां सर्वभूतानामारुरोह शचीपतिः ॥
पृथिवीं चान्तरिक्षं च दिवं च वरवारणम् ।
मुखाडम्बरनिर्घोषैः पूरयन्तमिवासकृत् ॥
हैमयन्त्रमहाकक्ष्यं हिरण्मयविषाणिनम् ।
मनोहरकुथास्तीर्णं सर्वरत्नविभूषितम् ॥
अनेकशतरत्नाभिः पताकाभिरलङ्कृतम् ।
नित्यस्रुतमदस्रावं क्षरन्तमिव तोयदम् ॥
दिशागजं महामात्रं काञ्चनस्रजमास्थितः ।
प्रबभौ मन्दराग्रस्थः प्रतपन् भानुमानिव ॥
ततो वज्रमयं भीमं प्रगृह्य परमाङ्कुशम् ।
ययौ बलवता सार्धं पावकेन शचीपतिः ॥
तं करेणुगजव्रातैर्विमानैश्च मरुद्गणाः ।
पृष्ठतोऽनुययुः प्रीताः कुबेरवरुणग्रहाः ॥
स वायुपथमास्थाय वैश्वानरपथं गतः ।
प्राप्य सूर्यपथं देवस्तत्रैवान्तरधीयत ॥
ततः सर्वदशार्हाणामाहुकस्य च याः स्त्रियः ।
नन्दगोपस्य महिषी यशोदा लोकविश्रुता ॥
रेवती च महाभागा रुक्मिणी च पतिव्रता ।
सत्या जाम्बवती चोभे गान्धारी शिंशुमापि वा ॥
विशोका लक्ष्मणा साध्वी सुमित्रा केतुमा तथा ।
वासुदेवमहिष्योऽन्याः श्रिया सार्धं ययुस्तदा ॥
विभूतिं द्रष्टुमनसः केशवस्य वराङ्गनाः ।
प्रीयमाणाः सभां जग्मुरालोकयितुमच्युतम् ॥
देवकी सर्वदेवीनां रोहिणी च पुरस्कृता ।
ददृशुर्देवमासीनं कृष्णं हलभृता सह ॥
तौ तु पूर्वमुपक्रम्य रोहिणीमभिवाद्य च ।
अभ्यवादयतां देवौ देवकीं रामकेशवौ ॥
देवकीं सप्तदेवीनां यथाश्रेष्ठं च मातरः ।
ववन्दे सह रामेण भगवान् वासवानुजः ॥
अथासनवरं प्राप्य वृष्णिदारपुरस्कृता ॥
उभावङ्कगतौ चक्रे देवकी रामकेशवौ ।
सा ताभ्यामृषभाक्षाभ्यां पुत्राभ्यां शुशुभे तदा ॥
देवकी देवमातेव मित्रेण वरुणेन च ।
ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि ॥
जाज्वल्यमाना वपुषा प्रभयातीव भारत ।
एकानङ्गेति यामाहुः कन्यां तां कामरूपिणीम् ॥
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ।
ततः स भगवान् रामस्तामुपाक्रम्य भामिनीम् ॥
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ।
दक्षिणेन कराग्रेण परिजग्राह माधवः ॥
ददृशुस्तां सभामध्ये भगिनीं रामकृष्णयोः ॥
रुक्मपद्मशयां पद्मां श्रीमिवोत्तमनागयोः ।
अथाक्षतमहावृष्ट्या लाजपुष्पघृतैरपि ॥
वृष्णयोऽवाकिरन् प्रीताः संकर्षणजनार्दनौ ।
सबालाः सहवृद्धाश्च सज्ञातिकुलबान्धवाः ॥
उपोपविविशुः प्रीता वृष्णयो मधुसूदनम् ।
पूज्यमानो महाबाहुः पौराणां रतिवर्धनः ॥
विवेश पुरुषव्याघ्रः स्ववेश्म मधुसूदनः ।
रुक्मिण्या सहितो देव्या प्रमुमोद सुखी सुखम् ॥
अनन्तरं च सत्याया जाम्बवत्याश्च भारत ।
सर्वासां च यदुश्रेष्ठः सर्वकालविहारवान् ॥
जगाम च हृषीकेशो रुक्मिण्याः स्वं निवेशनम् ।
एष तात महाबाहो विजयः शार्ङ्गधन्वनः ॥
एतदर्थं च जन्माहुर्मानुषेषु महात्मनः ।

( दाक्षिणात्यग्रन्थेऽत्राध्यायसमाप्तिः )

[ श्रीकृष्णकर्तृको बाणासुरस्य पराजयः, भीष्मवर्णित-श्रीकृष्णमाहात्म्यस्योपसंहारश्च ]

*भीष्म उवाच*

द्वारकायां ततः कृष्णः स्वदारेषु दिवानिशम् ।
सुखं लब्ध्वा महाराज प्रमुमोद महायशाः ॥
पौत्रस्य कारणाच्चक्रे विबुधानां हितं तदा ।
सवासवैः सुरैः सर्वैर्दुष्करं भरतर्षभ ॥
बाणो नामाभवद् राजा बलेर्ज्येष्ठसुतो बली ।
वीर्यवान् भरतश्रेष्ठ स च बाहुसहस्रवान् ॥
ततश्चक्रे तपस्तीव्रं सत्येन मनसा नृप ।
रुद्रमाराधयामास स च बाणः समा बह्वीः ॥
तस्मै बहुवरा दत्ताः शङ्करेण महात्मना ।
तस्माल्लब्ध्वा वरान् बाणो दुर्लभान् ससुरैरपि ॥
स शोणितपुरे राज्यं चकाराप्रतिमो बली ।
त्रासिताश्च सुराः सर्वे तेन बाणेन पाण्डव ॥
विजित्य विबुधान् सर्वान् सेन्द्रान् बाणः समा बह्वीः ।
अशासत महद् राज्यं कुबेर इव भारत ॥
ऋद्ध्यर्थं कुरुते यत्नं तस्य चैवोशना कविः ।
ततो राजन्नुषा नाम बाणस्य दुहिता तथा ॥
रूपेणाप्रतिमा लोके मेनकायाः सुता यथा ।

अथोपायेन कौन्तेय अनिरुद्धो महाद्युतिः ॥
प्राद्युम्निस्तामुषां प्राप्य प्रच्छन्नः प्रमुमोद ह ।
अथ बाणो महातेजास्तदा तत्र युधिष्ठिर ॥
तं गुह्यनिलयं ज्ञात्वा प्राद्युम्निं सुतया सह ।
गृहीत्वा कारयामास वस्तुं कारागृहे बलात् ॥
सुकुमारः सुखार्होऽथ तदा दुःखमवाप सः ।
बाणेन खेदितो राजन्ननिरुद्धो मुमोह च ॥
एतस्मिन्नेव काले तु नारदो मुनिपुङ्गवः ।
द्वारकां प्राप्य कौन्तेय कृष्णं दृष्ट्वा वचोऽब्रवीत् ॥

*नारद उवाच*

कृष्ण कृष्ण महाबाहो यदूनां कीर्तिवर्धन ।
त्वत्पौत्रो बाध्यमानोऽथ बाणेनामिततेजसा ॥
कृच्छ्रं प्राप्तोऽनिरुद्धो वै शेते कारागृहे सदा ।

*भीष्म उवाच*

एवमुक्त्वा सुरर्षिर्वै बाणस्याथ पुरं ययौ ॥
नारदस्य वचः श्रुत्वा ततो राजञ्जनार्दनः ।
आहूय बलदेवं वै प्रद्युम्नं च महाद्युतिम् ॥
आरुरोह गरुत्मन्तं ताभ्यां सह जनार्दनः ।
ततः सुपर्णमारुह्य त्रयस्ते पुरुषर्षभाः ॥
जग्मुः क्रुद्धा महावीर्या बाणस्य नगरं प्रति ।
अथासाद्य महाराज तत्पुरीं ददृशुश्च ते ॥
ताम्रप्राकारसंवीतां रूप्यद्वारैश्च शोभिताम् ।
हेमप्रासादसम्बाधां मुक्तामणिविचित्रिताम् ॥
उद्यानवनसम्पन्नां नृत्तगीतैश्च शोभिताम् ।
तोरणैः पक्षिभिः कीर्णां पुष्करिण्या च शोभिताम् ॥
तां पुरीं स्वर्गसंकाशां हृष्टपुष्टजनाकुलाम् ।
दृष्ट्वा मुदा युतां हैमां विस्मयं परमं ययुः ॥
तस्य बाणपुरस्यासन् द्वारस्था देवताः सदा ।
महेश्वरो गुहश्चैव भद्रकाली च पावकः ॥
एता वै देवता राजन् ररक्षुस्तां पुरीं सदा ।
अथ कृष्णो बलाज्जित्वा द्वारपालान् युधिष्ठिर ॥
सुसंक्रुद्धो महातेजाः शङ्खचक्रगदाधरः ।
आससादोत्तरद्वारं शङ्करेणाभिपालितम् ॥
तत्र तस्थौ महातेजाः शूलपाणिर्महेश्वरः ।
पिनाकं सशरं गृह्य बाणस्य हितकाम्यया ॥
ज्ञात्वा तमागतं कृष्णं व्यादितास्यमिवान्तकम् ।
महेश्वरो महाबाहुः कृष्णाभिमुखमाययौ ॥
ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ ।
तद् युद्धमभवद् घोरमचिन्त्यं रोमहर्षणम् ॥
अन्योन्यं तौ ततक्षाते अन्योन्यजयकाङ्क्षिणौ ।
दिव्यास्त्राणि च तौ देवौ क्रुद्धौ मुमुचतुस्तदा ॥
ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना ।
विजित्य तं महादेवं ततो युद्धे जनार्दनः ॥
अन्यांश्च जित्वा द्वारस्थान् प्रविवेश पुरोत्तमम् ।
प्रविश्य बाणमासाद्य स तत्राथ जनार्दनः ॥
चक्रे युद्धं महाक्रुद्धस्तेन बाणेन पाण्डव ।
बाणोऽपि सर्वशस्त्राणि शितानि भरतर्षभ ॥
सुसंक्रुद्धस्तदा युद्धे पातयामास केशवे ।
पुनरुद्यम्य शस्त्राणां सहस्रं सर्वबाहुभिः ॥
मुमोच बाणः संक्रुद्धः कृष्णं प्रति रणाजिरे ।
ततः कृष्णस्तु सञ्छिद्य तानि सर्वाणि भारत ॥
कृत्वा मुहूर्तं बाणेन युद्धं राजन्नधोक्षजः ।
चक्रमुद्यम्य राजन् वै दिव्यं शस्त्रोत्तमं ततः ॥
सहस्रबाहूंश्चिच्छेद बाणस्यामिततेजसः ।
ततो बाणो महाराज कृष्णेन भृशपीडितः ॥
छिन्नबाहुः पपाताशु विशाख इव पादपः ।
स पातयित्वा बालेयं बाणं कृष्णस्त्वरान्वितः ॥
प्राद्युम्निं मोक्षयामास क्षिप्तं कारागृहे तदा ।
मोक्षयित्वाथ गोविन्दः प्राद्युम्निं सह भार्यया ।
बाणस्य सर्वरत्नानि असंख्यानि जहार सः ॥
गोधनान्यथ सर्वस्वं स बाणस्यालये बलात् ।
जहार च हृषीकेशो यदूनां कीर्तिवर्धनः ॥
ततः स सर्वरत्नानि चाहृत्य मधुसूदनः ।
क्षिप्रमारोपयाञ्चक्रे तत् सर्वं गरुडोपरि ॥
त्वरयाथ स कौन्तेय बलदेवं महाबलम् ।
प्रद्युम्नं च महावीर्यमनिरुद्धं महाद्युतिम् ॥
उषां च सुन्दरीं राजन् भृत्यदासीगणैः सह ।
सर्वानेतान् समारोप्य रत्नानि विविधानि च ॥
मुदा युक्तो महातेजाः पीताम्बरधरो बली ।
दिव्याभरणचित्राङ्गः शङ्खचक्रगदासिभृत् ॥
आरुरोह गरुत्मन्तमुदयं भास्करो यथा ।
अथारुह्य सुपर्णं स प्रययौ द्वारकां प्रति ॥
प्रविश्य स्वपुरं कृष्णो यादवैः सहितस्ततः ।
प्रमुमोद तदा राजन् स्वर्गस्थो वासवो यथा ॥
सूदिता मौरवाः पाशा निशुम्भनरकौ हतौ ।
कृतक्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥
शौरिणा पृथिवीपालास्त्रासिता भरतर्षभ ।
धनुषश्च प्रणादेन पाञ्चजन्यस्वनेन च ॥
मेघप्रख्यैरनीकैश्च दाक्षिणात्यैः सुसंवृतम् ।
रुक्मिणं त्रासयामास केशवो भरतर्षभ ॥
ततः पर्जन्यघोषेण रथेनादित्यवर्चसा ।
उवाह महिषीं भोज्यामेष चक्रगदाधरः ॥
जारूथ्यामाहुतिः क्राथः शिशुपालश्च निर्जितः ।
वक्रश्च सह शैब्येन शतधन्वा च क्षत्रियः ॥

इन्द्रद्युम्नो हतः क्रोधाद् यवनश्च कशेरुमान्।
पर्वतानां सहस्रं च चक्रेण पुरुषोत्तमः॥
विभिद्य पुण्डरीकाक्षो द्युमत्सेनमयोधयत्।
महेन्द्रशिखरे चैव निमेषान्तरचारिणौ॥
जग्राह भरतश्रेष्ठ वरुणस्याभितश्चरौ।
इरावत्यामुभौ चैतावग्निसूर्यसमौ बले॥
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना।
अक्षप्रपतने चैव नेमिहंसपथेषु च॥
उभौ तावपि कृष्णेन स्वराष्ट्रे विनिपातितौ।
प्राग्ज्योतिषं पुरश्रेष्ठमसुरैर्बहुभिर्वृतम्।
प्राप्य लोहितकूटानि कृष्णेन वरुणो जितः॥
अजेयो दुष्प्रधर्षश्च लोकपालो महाद्युतिः।
इन्द्रद्वीपो महेन्द्रेण गुप्तो मघवता स्वयम्॥
पारिजातो हृतः पार्थ केशवेन बलीयसा।
पाण्ड्यं पौण्ड्रं च मात्स्यं च कलिङ्गं च जनार्दनः॥
जघान सहितान् सर्वानङ्गराजं च माधवः।
एष चैकशतं हत्वा रथेन क्षत्रपुङ्गवान्॥
गान्धारीमवहत् कृष्णो महिषीं यादवर्षभः।
बभ्रोश्च प्रियमन्विच्छन्नेष चक्रगदाधरः॥
वेणुदारिहृतां भार्यामुन्ममाथ युधिष्ठिर।
पर्याप्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्॥
वेणुदारिवशे युक्तां जिगाय मधुसूदनः।
अवाप्य तपसा वीर्यं बलमोजश्च भारत॥
त्रासिताः सगणाः सर्वे बाणेन विबुधाधिपाः।
वज्राशनिगदापाशैस्त्रासयद्भिरनेकशः॥
तस्य नासीद् रणे मृत्युर्देवैरपि सवासवैः।
सोऽभिभूतश्च कृष्णेन निहतश्च महात्मना॥
छित्त्वा बाहुसहस्रं तद् गोविन्देन महात्मना।
एष पीठं महाबाहुः कंसं च मधुसूदनः॥
पैठकं चातिलोमानं निजघान जनार्दनः।
जम्भमैरावतं चैव विरूपं च महायशाः॥
जघान भरतश्रेष्ठ शम्बरं चारिमर्दनम्।
एष भोगवतीं गत्वा वासुकिं भरतर्षभ॥
निर्जित्य पुण्डरीकाक्षो रौहिणेयममोचयत्।
एवं बहूनि कर्माणि शिशुरेव जनार्दनः॥
कृतवान् पुण्डरीकाक्षः संकर्षणसहायवान्।
एवमेषोऽसुराणां च सुराणां चापि सर्वशः॥
भयाभयकरः कृष्णः सर्वलोकेश्वरः प्रभुः।
एवमेष महाबाहुः शास्ता सर्वदुरात्मनाम्॥
कृत्वा देवार्थममितं स्वस्थानं प्रतिपत्स्यते।
एष भोगवतीं रम्यामृषिकान्तां महायशाः॥
द्वारकामात्मसात् कृत्वा सागरं गमयिष्यति।
बहुपुण्यवतीं रम्यां चैत्ययूपवतीं शुभाम्॥
द्वारकां वरुणावासं प्रवेक्ष्यति सकाननाम्।
तां सूर्यसदनप्रख्यां मनोज्ञां शार्ङ्गधन्वना॥
विसृष्टां वासुदेवेन सागरः प्लावयिष्यति।
सुरासुरमनुष्येषु नाभून्न भविता क्वचित्॥
यस्तामध्यवसद् राजा अन्यत्र मधुसूदनात्।
भ्राजमानास्तु शिशवो वृष्ण्यन्धकमहारथाः॥
तज्जुष्टं प्रतिपत्स्यन्ते नाकपृष्ठं गतासवः।
एवमेव दशार्हाणां विधाय विधिना विधिम्॥
विष्णुर्नारायणः सोमः सूर्यश्च सविता स्वयम्।
अप्रमेयोऽनियोज्यश्च यत्रकामगमो वशी॥
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव।
नैष गर्भत्वमापेदे न योन्यामवसत् प्रभुः॥
आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम्।
यथा बुद्बुद उत्थाय तत्रैव प्रविलीयते॥
चराचराणि भूतानि तथा नारायणे सदा।
न प्रमातुं महाबाहुः शक्यो भारत केशवः॥
परं ह्यपरमेतस्माद् विश्वरूपान्न विद्यते।
अयं तु पुरुषो बालः शिशुपालो न बुध्यते।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते॥३०॥
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान् नरः।
स वै पश्येद् यथा धर्मं न तथा चेदिराडयम्॥३१॥
सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत्॥३२॥
अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति।
दुष्कृतायां यथान्यायं तथायं कर्तुमर्हति॥३३॥

इति श्रीमहाभारते सभापर्वणि अर्घाभिहरणपर्वणि भीष्मवाक्ये अष्टात्रिंशोऽध्यायः॥ ३८॥

# एकोनचत्वारिंशोऽध्यायः

## राज्ञः प्रति सहदेवस्य सदर्पोक्तिस्ततो विक्षुब्धानां शिशुपालप्रभृतीनां युद्धायोद्यमनम्

*वैशम्पायन उवाच*

एवमुक्त्वा ततो भीष्मो विरराम महाबलः।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद् वचः॥ १॥
केशवं केशिहन्तारमप्रमेयपराक्रमम्।
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः॥ २॥
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम्।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः॥ ३॥
स एव हि मया वध्यो भविष्यति न संशयः।
मतिमन्तश्च ये केचिदाचार्यं पितरं गुरुम्॥ ४॥
अर्च्यमर्चितमर्घार्हमनुजानन्तु ते नृपाः।

ततो न व्याजहारैषां कश्चिद् बुद्धिमतां सताम् ॥ ५ ॥
मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ।
ततोऽपतत् पुष्पवृष्टिः सहदेवस्य मूर्धनि ॥ ६ ॥
अदृश्यरूपा वाचश्चाप्यब्रुवन् साधु साध्विति ।
आविध्यदजिनं कृष्णं भविष्यद्भूतजल्पकः ॥ ७ ॥
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ ८ ॥
कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचन ॥ ९ ॥

*वैशम्पायन उवाच*

पूजयित्वा च पूजार्हान् ब्रह्मक्षत्रविशेषवित् ।
सहदेवो नृणां देवः समापयत कर्म तत् ॥१०॥
तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः ।
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् ॥११॥
स्थितः सेनापतिर्योऽहं मन्यध्वं किं तु साम्प्रतम् ।
युधि तिष्ठाम संनह्य समेतान् वृष्णिपाण्डवान् ॥१२॥
इति सर्वान् समुत्साह्य राज्ञस्तांश्चेदिपुङ्गवः ।
यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः ॥१३॥
तत्राहूता गताः सर्वे सुनीथप्रमुखा गणाः ।
समदृश्यन्त संक्रुद्धा विवर्णवदनास्तथा ॥१४॥
युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम् ।
न स्याद् यथा तथा कार्यमेवं सर्वे तदाब्रुवन् ॥१५॥
निष्कर्षान्निश्चयात् सर्वे राजानः क्रोधमूर्छिताः ।
अब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ॥१६॥
सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥१७॥
तं बलौघमपर्यन्तं राजसागरमक्षयम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥१८॥

इति श्रीमहाभारते सभापर्वणि अर्घाभिहरणपर्वणि राजमन्त्रणे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ( शिशुपालवधपर्व )

# चत्वारिंशोऽध्यायः

### सचिन्तं युधिष्ठिरं प्रति भीष्मस्य सान्त्वनावचनम्

*वैशम्पायन उवाच*

ततः सागरसंकाशं दृष्ट्वा नृपतिमण्डलम् ।
संवर्तवाताभिहतं भीमं क्षुब्धमिवार्णवम् ॥ १ ॥
रोषात् प्रचलितं सर्वमिदमाह युधिष्ठिरः ।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहम् ।
बृहस्पतिं बृहत्तेजाः पुरुहूत इवारिहा ॥ २ ॥
असौ रोषात् प्रचलितो महान् नृपतिसागरः ।
अत्र यत् प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥ ३ ॥
यज्ञस्य च न विघ्नः स्यात् प्रजानां च हितं भवेत् ।
यथा सर्वत्र तत् सर्वं ब्रूहि मेऽद्य पितामह ॥ ४ ॥
इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ ५ ॥
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥ ६ ॥
प्रसुप्ते हि यथा सिंहे श्वानस्तस्मिन् समागताः ।
भषेयुः सहिताः सर्वे तथेमे वसुधाधिपाः ॥ ७ ॥
वृष्णिसिंहस्य सुप्तस्य तथामी प्रमुखे स्थिताः ।
भषन्ते तात संक्रुद्धाः श्वानः सिंहस्य संनिधौ ॥ ८ ॥
न हि सम्बुध्यते यावत् सुप्तः सिंह इवाच्युतः ।
तेन सिंहीकरोत्येतान् नृसिंहश्चेदिपुङ्गवः ॥ ९ ॥
पार्थिवान् पार्थिवश्रेष्ठः शिशुपालोऽप्यचेतनः ।
सर्वान् सर्वात्मना तात नेतुकामो यमक्षयम् ॥१०॥
नूनमेतत् समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्य तेजस्तिष्ठति भारत ॥११॥
विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम् ॥१२॥
आदातुं च नरव्याघ्रो यं यमिच्छत्ययं तदा ।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥१३॥
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।
प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिरः ॥१४॥

*वैशम्पायन उवाच*

इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः ।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥१५॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि युधिष्ठिराश्वासने चत्वारिंशोऽध्यायः ॥ ४० ॥

# एकचत्वारिंशोऽध्यायः

### शिशुपालकृता भीष्मनिन्दा

*शिशुपाल उवाच*

विभीषिकाभिर्बह्वीभिर्भीषयन् सर्वपार्थिवान् ।
न व्यपत्रपसे कस्माद् वृद्धः सन् कुलपांसन ॥ १ ॥
युक्तमेतत् तृतीयायां प्रकृतौ वर्तता त्वया ।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ २ ॥
नावि नौरिव सम्बद्धा यथान्धो वान्धमन्वियात् ।

तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ ३ ॥
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया कीर्तयतास्माकं भूयः प्रव्यथितं मनः ॥ ४ ॥
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ ५ ॥
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धः सन् गोपं संस्तोतुमिच्छसि ॥ ६ ॥
यद्यनेन हतो बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ ७ ॥
चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ ८ ॥
(अर्कप्रमाणौ तौ वृक्षौ यद्यनेन निपातितौ ।
नागश्च पातितोऽनेन तत्र को विस्मयः कृतः ॥)
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥ ९ ॥
भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि ।
इति ते भीष्म शृण्वानाः परे विस्मयमागताः ॥१०॥
यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः ।
स चानेन हतः कंस इत्येतन्न महाद्भुतम् ॥११॥
न ते श्रुतमिदं भीष्म नूनं कथयतां सताम् ।
यद् वक्ष्ये त्वामधर्मज्ञं वाक्यं कुरुकुलाधम ॥१२॥
स्त्रीषु गोषु न शस्त्राणि पातयेद् ब्राह्मणेषु च ।
यस्य चान्नानि भुञ्जीत यत्र च स्यात् प्रतिश्रयः ॥१३॥
इति सन्तोऽनुशासन्ति सज्जनं धर्मिणः सदा ।
भीष्म लोके हि तत् सर्वं वितथं त्वयि दृश्यते ॥१४॥
ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन् कौरवाधम ॥१५॥
गोघ्नः स्त्रीघ्नश्च सन् भीष्म त्वद्वाक्याद् यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं संस्तवमर्हति ॥१६॥
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः ।
सम्भावयति साप्येवं त्वद्वाक्याच्च जनार्दनः ।
एवमेतत् सर्वमिति तत् सर्वं वितथं ध्रुवम् ॥१७॥
न गाथागाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ॥१८॥
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः ।
अति पापीयसी चैषा पाण्डवानामपीष्यते ॥१९॥
येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः ।
धर्मवांस्त्वमधर्मज्ञः सतां मार्गादवप्लुतः ॥२०॥
को हि धर्मिणमात्मानं जानञ्ज्ञानविदां वरः ।
कुर्याद् यथा त्वया भीष्म कृतं धर्ममवेक्षता ॥२१॥
नेत् त्वं धर्मं विजानासि यदि प्राज्ञा मतिस्तव ।
अन्यकामा हि धर्मज्ञ कन्यका प्राज्ञमानिना ।
अम्बा नामेति भद्रं ते कथं सापहृता त्वया ॥२२॥
तां त्वयापि हृतां भीष्म कन्यां नैषितवान् यतः ।
भ्राता विचित्रवीर्यस्ते सतां मार्गमनुष्ठितः ॥२३॥
दारयोर्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥२४॥
को हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
यद् धारयसि मोहाद् वा क्लीबत्वाद् वा न संशयः॥२५॥
न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रवीः ॥२६॥
इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हन्ति षोडशीम् ॥२७॥
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयात् ॥२८॥
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुसारकः ।
हंसवत् त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥२९॥
एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा ।
भीष्म यत् तदहं सम्यग् वक्ष्यामि तव शृण्वतः ॥३०॥
वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवद् पुरा ।
धर्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति च ॥३१॥
धर्मं चरत माधर्ममिति तस्य वचः किल ।
पक्षिणः शुश्रुवुर्भीष्म सततं सत्यवादिनः ॥३२॥
अथास्य भक्ष्यमाजह्रुः समुद्रजलचारिणः ।
अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम ॥३३॥
ते च तस्य समभ्याशे निक्षिप्याण्डानि सर्वशः ।
समुद्राम्भस्यमज्जन्त चरन्तो भीष्म पक्षिणः ।
तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ॥३४॥
स हंसः सम्प्रमत्तानामप्रमत्तः स्वकर्मणि ।
ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः ।
अशङ्कत महाप्राज्ञः स कदाचिद् ददर्श ह ॥३५॥
ततः स कथयामास दृष्ट्वा हंसस्य किल्बिषम् ।
तेषां परमदुःखार्तः स पक्षी सर्वपक्षिणाम् ॥३६॥
ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समीपगाः ।
निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥३७॥
ते त्वां हंससधर्माणमपीमे वसुधाधिपाः ।
निहन्युर्भीष्म संक्रुद्धाः पक्षिणस्तं यथाण्डजम् ॥३८॥
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
भीष्म यां तां च ते सम्यक् कथयिष्यामि भारत ॥३९॥
अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि ।
अण्डभक्षणकर्मैतत् तव वाचमतीयते ॥४०॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि शिशुपालवाक्ये एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# द्विचत्वारिंशोऽध्यायः

## शिशुपालं प्रति कुपितस्य भीमसेनस्य भीष्मकर्तृकं वारणम्

*शिशुपाल उवाच*

स मे बहुमतो राजा जरासंधो महाबलः।
योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे ॥ १ ॥
केशवेन कृतं कर्म जरासंधवधे तदा।
भीमसेनार्जुनाभ्यां च कस्तत् साध्विति मन्यते ॥ २ ॥
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना।
दृष्टः प्रभावः कृष्णेन जरासंधस्य भूपतेः ॥ ३ ॥
येन धर्मात्मनाऽऽत्मानं ब्रह्मण्यमविजानता।
नेषितं पाद्यमस्मै तद् दातुमग्रे दुरात्मने ॥ ४ ॥
भुज्यतामिति तेनोक्ताः कृष्णभीमधनंजयाः।
जरासंधेन कौरव्य कृष्णेन विकृतं कृतम् ॥ ५ ॥
यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे।
कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ॥ ६ ॥
इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया।
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति ॥ ७ ॥
अथ वा नैतदाश्चर्यं येषां त्वमसि भारत।
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥ ८ ॥

*वैशम्पायन उवाच*

तस्य तद् वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु।
चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥ ९ ॥
तथा पद्मप्रतीकाशे स्वभावायतविस्तृते।
भूयः क्रोधाभिताम्राक्षे रक्ते नेत्रे बभूवतुः ॥१०॥
त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥११॥
दन्तान् संदशतस्तस्य कोपाद् ददृशुराननम्।
युगान्ते सर्वभूतानि कालस्येव जिघत्सतः ॥१२॥
उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम्।
भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ १३ ॥
तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत।
गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः ॥ १४ ॥
नातिचक्राम भीष्मस्य स हि वाक्यमरिंदमः।
समुद्वृत्तो घनापाये वेलामिव महोदधिः ॥ १५ ॥
शिशुपालस्तु संक्रुद्धे भीमसेने जनाधिप।
नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः ॥ १६ ॥
उत्पतन्तं तु वेगेन पुनः पुनररिंदमः।
न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा ॥ १७ ॥
प्रहसंश्चाब्रवीद् वाक्यं चेदिराजः प्रतापवान्।
भीमसेनमभिक्रुद्धं दृष्ट्वा भीमपराक्रमम् ॥ १८ ॥
मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपाः।
मत्प्रभावविनिर्दग्धं पतङ्गमिव वह्निना ॥ १९ ॥
ततश्चेदिपतेर्वाक्यं श्रुत्वा तत् कुरुसत्तमः।
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥ २० ॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि भीमक्रोधे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

# त्रिचत्वारिंशोऽध्यायः

## भीष्मकर्तृकं शिशुपालजन्मवृत्तान्तवर्णनम्

*भीष्म उवाच*

चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः।
रासभारावसदृशं रुराव च ननाद च ॥ १ ॥
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ।
वैकृतं तस्य तौ दृष्ट्वा त्यागायाकुरुतां मतिम् ॥ २ ॥
ततः सभार्यं नृपतिं सामात्यं सपुरोहितम्।
चिन्तासम्मूढहृदयं वागुवाचाशरीरिणी ॥ ३ ॥
एष ते नृपते पुत्रः श्रीमाञ्जातो बलाधिकः।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥ ४ ॥
न च वै तस्य मृत्युर्वै न कालः प्रत्युपस्थितः।
मृत्युर्हन्तास्य शस्त्रेण स चोत्पन्नो नराधिप ॥ ५ ॥
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः।
पुत्रस्नेहाभिसंतप्ता जननी वाक्यमब्रवीत् ॥ ६ ॥
येनेदमीरितं वाक्यं ममैतं तनयं प्रति।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ ७ ॥
याथातथ्येन भगवान् देवो वा यदि वेतरः।
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ॥ ८ ॥
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः।
यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ॥ ९ ॥
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ।
तृतीयमेतद् बालस्य ललाटस्थं तु लोचनम् ॥ १० ॥
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति।
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ॥ ११ ॥

पृथिव्यां पार्थिवाः सर्वे अभ्यागच्छन् दिदृक्षवः।
तान् पूजयित्वा सम्प्राप्तान् यथार्हं स महीपतिः ॥ १२ ॥
एकैकस्य नृपस्याङ्के पुत्रमारोपयत् तदा।
एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम् ॥ १३ ॥
शिशुरङ्कसमारूढो न तत् प्राप निदर्शनम्।
एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ ॥ १४ ॥
ततश्चेदिपुरं प्राप्तौ संकर्षणजनार्दनौ।
यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ॥ १५ ॥
अभिवाद्य यथान्यायं यथाश्रेष्ठं नृपं च ताम्।
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ १६ ॥
साभ्यर्च्य तौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः।
पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात् स्वयम् ॥ १७ ॥
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ।
पेततुस्तच्च नयनं न्यमज्जत ललाटजम् ॥ १८ ॥
तद् दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत।
ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥ १९ ॥
त्वं ह्यार्तानां समाश्वासो भीतानामभयप्रदः।
एवमुक्तस्ततः कृष्णः सोऽब्रवीद् यदुनन्दनः ॥ २० ॥
मा भैस्त्वं देवि धर्मज्ञे न मत्तोऽस्ति भयं तव।
ददामि कं वरं किं च करवाणि पितृष्वसः ॥ २१ ॥
शक्यं वा यदि वाशक्यं करिष्यामि वचस्तव।
एवमुक्ता ततः कृष्णमब्रवीद् यदुनन्दनम् ॥ २२ ॥
शिशुपालस्यापराधान् क्षमेथास्त्वं महाबल।
मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥ २३ ॥

*श्रीकृष्ण उवाच*

अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः।
पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ २४ ॥

*भीष्म उवाच*

एवमेष नृपः पापः शिशुपालः सुमन्दधीः।
त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥ २५ ॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि शिशुपालवृत्तान्तकथने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

# चतुश्चत्वारिंशोऽध्यायः

## शिशुपालकृतं भीष्मस्य भर्त्सनम्, भीष्मस्य श्रीकृष्णेन सह योद्धुं राज्ञामाह्वानम्

*भीष्म उवाच*

नैषा चेदिपतेर्बुद्धिर्यया त्वाऽऽह्वयतेऽच्युतम्।
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः ॥ १ ॥
को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः।
क्षेप्तुं कालपरीतात्मा यथैष कुलपांसनः ॥ २ ॥
एष ह्यस्य महाबाहुस्तेजोंऽशश्च हरेर्ध्रुवम्।
तमेव पुनरादातुमिच्छत्युत तथा विभुः ॥ ३ ॥
येनैष कुरुशार्दूल शार्दूल इव चेदिराट्।
गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ॥ ४ ॥

*वैशम्पायन उवाच*

ततो न ममृषे चैद्यस्तद् भीष्मवचनं तदा।
उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरम् ॥ ५ ॥

*शिशुपाल उवाच*

द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः।
यस्य संस्तववक्ता त्वं वन्दिवत् सततोत्थितः ॥ ६ ॥
संस्तवे च मनो भीष्म परेषां रमते यदि।
तदा संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ ७ ॥
दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम्।
जायमानेन येनेयमभवद् दारिता मही ॥ ८ ॥
वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले।
स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ ९ ॥
यस्येमे कुण्डले दिव्ये सहजे देवनिर्मिते।
कवचं च महाबाहो बालार्कसदृशप्रभम् ॥ १० ॥
वासवप्रतिमो येन जरासंधोऽतिदुर्जयः।
विजितो बाहुयुद्धेन देहभेदं च लम्भितः ॥ ११ ॥
द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ।
स्तुहि स्तुत्यावुभौ भीष्म सततं द्विजसत्तमौ ॥ १२ ॥
ययोरन्यतरो भीष्म संक्रुद्धः सचराचराम्।
इमां वसुमतीं कुर्यान्निःशेषामिति मे मतिः ॥ १३ ॥
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम्।
नाश्वत्थाम्नः समं भीष्म न च तौ स्तोतुमिच्छसि ॥ १४ ॥
पृथिव्यां सागरान्तायां यो वै प्रतिसमो भवेत्।
दुर्योधनं त्वं राजेन्द्रमतिक्रम्य महाभुजम् ॥ १५ ॥
जयद्रथं च राजानं कृतास्त्रं दृढविक्रमम्।
द्रुमं किम्पुरुषाचार्यं लोके प्रथितविक्रमम्।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ १६ ॥
वृद्धं च भारताचार्यं तथा शारद्वतं कृपम्।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ १७ ॥
धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमम्।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ १८ ॥
भीष्मकं च महावीर्यं दन्तवक्त्रं च भूमिपम्।
भगदत्तं यूपकेतुं जयत्सेनं च मागधम् ॥ १९ ॥

विराटद्रुपदौ चोभौ शकुनिं च बृहद्बलम्।
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तरम् ॥ २० ॥
शङ्खं च सुमहाभागं वृषसेनं च मानिनम्।
एकलव्यं च विक्रान्तं कालिङ्गं च महारथम् ॥ २१ ॥
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम्।
शल्यादीनपि कस्मात् त्वं न स्तौषि वसुधाधिपान्।
स्तवाय यदि ते बुद्धिर्वर्तते भीष्म सर्वदा ॥ २२ ॥
किं हि शक्यं मया कर्तुं यद् वृद्धानां त्वया नृप।
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ २३ ॥
आत्मनिन्दाऽऽत्मपूजा च परनिन्दा परस्तवः।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ २४ ॥
यदस्तव्यमिमं शश्वन्मोहात् संस्तौषि भक्तितः।
केशवं तच्च ते भीष्म न कश्चिदनुमन्यते ॥२५॥
कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि।
समावेशयसे सर्वं जगत् केवलकाम्यया ॥२६॥
अथ वैषा न ते बुद्धिः प्रकृतिं याति भारत।
मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा ॥२७॥
भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे।
भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ॥२८॥
मा साहसमितीदं सा सततं वाशते किल।
साहसं चात्मनातीव चरन्ती नावबुध्यते ॥२९॥
सा हि मांसार्गलं भीष्म मुखात् सिंहस्य खादतः।
दन्तान्तरविलग्नं यत् तदादत्तेऽल्पचेतना ॥३०॥
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम्।
तद्वत् त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ॥३१॥
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयम्।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥३२॥

*वैशम्पायन उवाच*

ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः।
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ॥३३॥
इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम्।
सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ॥३४॥
एवमुक्ते तु भीष्मेण ततः संचुकुशुर्नृपाः।
केचिज्जहृषिरे तत्र केचिद् भीष्मं जगर्हिरे ॥३५॥
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद् वचः।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम् ॥३६॥
हन्यतां दुर्मतिर्भीष्मः पशुवत् साध्वयं नृपाः।
सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना ॥३७॥
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः।
उवाच मतिमान् भीष्मस्तानेव वसुधाधिपान् ॥३८॥
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये।
यत् तु वक्ष्यामि तत् सर्वं शृणुध्वं वसुधाधिपाः ॥३९॥
पशुवद् घातनं वा मे दहनं वा कटाग्निना।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥४०॥
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः।
यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ॥४१॥
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम्।
यादवस्यैव देवस्य देहं विशतु पातितः ॥४२॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि भीष्मवाक्ये चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः

### श्रीकृष्णकर्तृकः शिशुपालवधो राजसूयसमाप्तिः समेषां ब्राह्मणानां नृपाणां श्रीकृष्णस्य च स्वदेशे गमनम्

*वैशम्पायन उवाच*

ततः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥ १ ॥
आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ २ ॥
सह त्वया हि मे वध्याः सर्वथा कृष्ण पाण्डवाः।
नृपतीन् समतिक्रम्य यैरराजा त्वमर्चितः ॥ ३ ॥
ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम्।
अनर्हमर्हवत् कृष्ण वध्यास्त इति मे मतिः ॥ ४ ॥
इत्युक्त्वा राजशार्दूलस्तस्थौ गर्जन्नमर्षणः।
एवमुक्तस्ततः कृष्णो मृदुपूर्वमिदं वचः।
उवाच पार्थिवान् सर्वान् स समक्षं च वीर्यवान् ॥ ५ ॥
एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः।
सात्वतानां नृशंसात्मा न हितोऽनपकारिणाम् ॥ ६ ॥
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत्।
अदहद् द्वारकामेष स्वस्रीयः सन् नराधिपाः ॥ ७ ॥
क्रीडतो भोजराजस्य एष रैवतके गिरौ।
हत्वा बद्ध्वा च तान् सर्वानुपायात् स्वपुरं पुरा ॥ ८ ॥
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम्।
पितुर्मे यज्ञविघ्नार्थमहरत् पापनिश्चयः ॥ ९ ॥

सौवीरान् प्रति यातां च बभ्रोरेष तपस्विनः।
भार्यामभ्यहरन्मोहादकामां तामितो गताम्॥ १०॥
एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम्।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत्॥ ११॥
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम्।
दिष्ट्या हीदं सर्वराज्ञां संनिधावद्य वर्तते॥ १२॥
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम्।
कृतानि तु परोक्षं मे यानि तानि निबोधत॥ १३॥
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम्।
अवलेपाद् वधार्हस्य समग्रे राजमण्डले॥ १४॥
रुक्मिण्यामस्य मूढस्य प्रार्थनाऽऽसीन्मुमूर्षतः।
न च तां प्राप्तवान् मूढः शूद्रो वेदश्रुतीमिव॥ १५॥

वैशम्पायन उवाच

एवमादि ततः सर्वे सहितास्ते नराधिपाः।
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन्॥ १६॥
तस्य तद् वचनं श्रुत्वा शिशुपालः प्रतापवान्।
जहास स्वनवद्धासं वाक्यं चेदमुवाच ह॥ १७॥
मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन्।
विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम्॥ १८॥
मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत्।
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन॥ १९॥
क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम।
क्रुद्धाद् वापि प्रसन्नाद् वा किं मे त्वत्तो भविष्यति॥२०॥
तथा ब्रुवत एवास्य भगवान् मधुसूदनः।
मनसाचिन्तयच्चक्रं दैत्यवर्गनिषूदनम्॥ २१॥
एतस्मिन्नेव काले तु चक्रे हस्तगते सति।
उवाच भगवानुच्चैर्वाक्यं वाक्यविशारदः॥ २२॥
शृण्वन्तु मे महीपाला येनैतत् क्षमितं मया।
अपराधशतं क्षाम्यं मातुरस्यैव याचने॥ २३॥
दत्तं मया याचितं च तानि पूर्णानि पार्थिवाः।
अधुना वधयिष्यामि पश्यतां वो महीक्षिताम्॥ २४॥
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात्।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः॥ २५॥
स पपात महाबाहुर्वज्राहत इवाचलः।
ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः॥ २६॥
उत्पतन्तं महाराज गगनादिव भास्करम्।
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम्।
ववन्दे तत् तदा तेजो विवेश च नराधिप॥ २७॥
तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः।
यद् विवेश महाबाहुं तत् तेजः पुरुषोत्तमम्॥ २८॥
अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः।
कृष्णेन निहते चैद्ये चचाल च वसुंधरा॥ २९॥

ततः केचिन्महीपाला नाब्रुवंस्तत्र किंचन।
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम्॥ ३०॥
हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नमर्षिताः।
अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः॥ ३१॥
रहश्च केचिद् वार्ष्णेयं प्रशशंसुर्नराधिपाः।
केचिदेव सुसंरब्धा मध्यस्थास्त्वपरेऽभवन्॥ ३२॥
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः।
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः॥ ३३॥
शशंसुर्निर्वृताः सर्वे दृष्ट्वा कृष्णस्य विक्रमम्।
पाण्डवस्त्वब्रवीद् भ्रातॄन् सत्कारेण महीपतिम्॥ ३४॥
दमघोषात्मजं वीरं संस्कारयत मा चिरम्।
तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा॥ ३५॥
चेदीनामाधिपत्ये च पुत्रमस्य महीपतेः।
अभ्यषिञ्चत् तदा पार्थः सह तैर्वसुधाधिपैः॥ ३६॥
ततः स कुरुराजस्य क्रतुः सर्वसमृद्धिमान्।
यूनां प्रीतिकरो राजन् स बभौ विपुलौजसः॥ ३७॥
शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान्।
अन्नवान् बहुभक्ष्यश्च केशवेन सुरक्षितः॥ ३८॥
(ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम्।
उपेन्द्रबुद्ध्या विहितं सहदेवेन भारत॥
ददृशुस्तोरणान्यत्र हेमतालमयानि च।
दीप्तभास्करतुल्यानि प्रदीप्तानीव तेजसा।
स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्यौरिव सम्बभौ॥
शय्यासनविहारांश्च सुबहून् वित्तसम्भृतान्।
घटान् पात्रीः कटाहानि कलशानि समन्ततः।
न ते किंचिदसौवर्णमपश्यंस्तत्र पार्थिवाः॥
ओदनानां विकाराणि स्वादूनि विविधानि च।
सुबहूनि च भक्ष्याणि पेयानि मधुराणि च।
ददुर्द्विजानां सततं राजप्रेष्या महाध्वरे॥
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां तदा।
स्थापिता तत्र संज्ञाभूच्छङ्खोऽध्मायत नित्यशः॥
मुहुर्मुहुः प्रणादस्तु तस्य शङ्खस्य भारत।
उत्तमं शङ्खशब्दं तं श्रुत्वा विस्मयमागताः॥
एवं प्रवृत्ते यज्ञे तु तुष्टपुष्टजनायुते।
अन्नस्य बहवो राजन्नुत्सेधाः पर्वतोपमाः।
दधिकुल्याश्च ददृशुः सर्पिषां च ह्रदाञ्जनाः॥
जम्बूद्वीपो हि सकलो नानाजनपदायुतः।
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन् महाक्रतौ॥
राजानः स्रग्विणस्तत्र सुमृष्टमणिकुण्डलाः।
विविधान्यन्नपानानि लेह्यानि विविधानि च।
तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुः स्म ते॥

एतानि सततं भुक्त्वा तस्मिन् यज्ञे द्विजातयः ।
परां प्रीतिं ययुः सर्वे मोदमानास्तदा भृशम् ॥
एवं समुदितं सर्वं बहुगोधनधान्यवत् ।
यज्ञवाटं नृपा दृष्ट्वा विस्मयं परमं ययुः ॥
ऋत्विजश्च यथाशास्त्रं राजसूयं महाक्रतुम् ।
पाण्डवस्य यथाकालं जुहुवुः सर्वयाजकाः ॥
व्यासधौम्यादयः सर्वे विधिवत् षोडशर्त्विजः ।
स्वस्वकर्माणि चक्रुस्ते पाण्डवस्य महाक्रतौ ॥
नाषडङ्गविदत्रासीत् सदस्यो नाबहुश्रुतः ।
नाव्रतो नानुपाध्यायो नपापो नाक्षमो द्विजः ॥
न तत्र कृपणः कश्चिद् दरिद्रो न बभूव ह ।
क्षुधितो दुःखितो वापि प्राकृतो वापि मानुषः ॥
भोजनं भोजनार्थिभ्यो दापयामास सर्वदा ।
सहदेवो महातेजाः सततं राजशासनात् ॥
सस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवसे दिवसे चक्रुर्यथाशास्त्रार्थचक्षुषः ॥
ब्राह्मणा वेदशास्त्रज्ञाः कथाश्चक्रुश्च सर्वदा ।
रेमिरे च कथान्ते तु सर्वे तस्मिन् महाक्रतौ ॥
देवैरन्यैश्च यक्षैश्च उरगैर्दिव्यमानुषैः ।
विद्याधरगणैः कीर्णः पाण्डवस्य महात्मनः ॥
स राजसूयः शुशुभे धर्मराजस्य धीमतः ।
गन्धर्वगणसंकीर्णः शोभितोऽप्सरसां गणैः ॥
देवैर्मुनिगणैर्यक्षैर्देवलोक इवापरः ।
स किम्पुरुषगीतैश्च किन्नरैरुपशोभितः ॥
नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस्तथान्ये गीतकोविदाः ।
रमयन्ति स्म तान् सर्वान् यज्ञकर्मान्तरेष्वथ ॥
इतिहासपुराणानि आख्यानानि च सर्वशः ।
ऊचुर्वै शब्दशास्त्रज्ञा नित्यं कर्मान्तरेष्वथ ॥
भेर्यश्च मुरजाश्चैव मड्डुका गोमुखाश्च ये ।
शृङ्गवंशाम्बुजाश्चैव श्रूयन्ते स्म सहस्रशः ॥
लोकेऽस्मिन् सर्वविप्राश्च वैश्याः शूद्राश्च सर्वशः ।
सर्वे म्लेच्छाः सर्ववर्णाः सादिमध्यान्तजास्तथा ॥
नानादेशसमुद्भूतैर्नानाजातिभिरागतैः ।
पर्याप्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥
भीष्मद्रोणादयः सर्वे कुरवः ससुयोधनाः ।
वृष्णयश्च समग्राश्च पञ्चालाश्चापि सर्वशः ।
यथार्हं सर्वकर्माणि चक्रुर्दासा इव क्रतौ ॥
एवं प्रवृत्तो यज्ञः स धर्मराजस्य धीमतः ।
शुशुभे च महाबाहो सोमस्येव क्रतुर्यथा ॥
वस्त्राणि कम्बलांश्चैव प्रावारांश्चैव सर्वदा ।
निष्कहेमजभाण्डानि भूषणानि च सर्वशः ।
प्रददौ तत्र सततं धर्मराजो युधिष्ठिरः ॥
यानि तत्र महीपेभ्यो लब्धं वा धनमुत्तमम् ।
तानि रत्नानि सर्वाणि विप्राणां प्रददौ तदा ॥
कोटीसहस्रं प्रददौ ब्राह्मणानां महात्मनाम् ।
न करिष्यति तं लोके कश्चिदन्यो महीपतिः ॥
याजकाः सर्वकामैश्च सततं तत्पुर्धनैः ।
व्यासं धौम्यं च प्रयतो नारदं च महामतिम् ॥
सुमन्तुं जैमिनिं पैलं वैशम्पायनमेव च ।
याज्ञवल्क्यं कठं चैव कलापं च महौजसम् ॥
सर्वांश्च विप्रप्रवरान् पूजयामास सत्कृतान् ॥

*युधिष्ठिर उवाच*

युष्मत्प्रभावात् प्राप्तोऽयं राजसूयो महाक्रतुः ।
जनार्दनप्रभावाच्च सम्पूर्णो मे मनोरथः ॥

*वैशम्पायन उवाच*

अथ यज्ञं समाप्यान्ते पूजयामास माधवम् ।
बलदेवं च देवेशं भीष्माद्यांश्च कुरूत्तमान् ॥ )
समापयामास च तं राजसूयं महाक्रतुम् ।
तं तु यज्ञं महाबाहुरासमाप्तेर्जनार्दनः ।
ररक्ष भगवाञ्छौरिः शार्ङ्गचक्रगदाधरः ॥ ३९ ॥
ततस्त्ववभृथस्नातं धर्मात्मानं युधिष्ठिरम् ।
समस्तं पार्थिवं क्षत्रमुपगम्येदमब्रवीत् ॥ ४० ॥
दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवानसि ।
आजमीढाजमीढानां यशः संवर्धितं त्वया ॥ ४१ ॥
कर्मणैतेन राजेन्द्र धर्मश्च सुमहान् कृतः ।
आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः ॥ ४२ ॥
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि ।
श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ॥ ४३ ॥
यथार्हं पूज्य नृपतीन् भ्रातॄन् सर्वानुवाच ह ।
राजानः सर्व एवैते प्रीत्यास्मान् समुपागताः ॥ ४४ ॥
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परंतपाः ।
अनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् ॥ ४५ ॥
भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः ।
यथार्हं नृपतीन् सर्वानेकैकं समनुव्रजन् ॥ ४६ ॥
विराटमन्वयात् तूर्णं धृष्टद्युम्नः प्रतापवान् ।
धनंजयो यज्ञसेनं महात्मानं महारथम् ॥ ४७ ॥
भीष्मं च धृतराष्ट्रं च भीमसेनो महाबलः ।
द्रोणं तु ससुतं वीरं सहदेवो युधाम्पतिः ॥ ४८ ॥
नकुलः सुबलं राजन् सहपुत्रं समन्वयात् ।
द्रौपदेयाः ससौभद्राः पर्वतीयान् महारथान् ॥ ४९ ॥
अन्वगच्छंस्तथैवान्यान् क्षत्रियान् क्षत्रियर्षभाः ।
एवं सुपूजिताः सर्वे जग्मुर्विप्राः सहस्रशः ॥ ५० ॥

गतेषु पार्थिवेन्द्रेषु सर्वेषु ब्राह्मणेषु च ।
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् ॥ ५१ ॥
आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ॥ ५२ ॥
तमुवाचैवमुक्तस्तु धर्मराजो जनार्दनम् ।
तव प्रसादाद् गोविन्द प्राप्तः क्रतुवरो मया ॥ ५३ ॥
क्षत्रं समग्रमपि च त्वत्प्रसादाद् वशे स्थितम् ।
उपादाय बलिं मुख्यं मामेव समुपस्थितम् ॥ ५४ ॥
कथं त्वद्गमनार्थं मे वाणी वितरतेऽनघ ।
न ह्यहं त्वामृते वीर रतिं प्राप्नोमि कर्हिचित् ॥ ५५ ॥
अवश्यं चैव गन्तव्या भवता द्वारकापुरी ।
एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान् ॥ ५६ ॥
अभिगम्याब्रवीत् प्रीतः पृथां पृथुयशा हरिः ।
साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः ॥ ५७ ॥
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ।
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ॥ ५८ ॥
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ।
निष्क्रम्यान्तःपुरात् तस्माद् युधिष्ठिरसहायवान् ॥ ५९ ॥
स्नातश्च कृतजप्यश्च ब्राह्मणान् स्वस्ति वाच्य च ।
ततो मेघवपुःप्रख्यं स्यन्दनं च सुकल्पितम् ।
योजयित्वा महाबाहुर्दारुकः समुपस्थितः ॥ ६० ॥
उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनम् ।
प्रदक्षिणमुपावृत्य समारुह्य महामनाः ॥ ६१ ॥
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ ६२ ॥
( सात्यकिः कृतवर्मा च रथमारुह्य सत्वरौ ।
वीजयामासतुस्तत्र चामराभ्यां हरिं तथा ॥
बलदेवश्च देवेशो यादवाश्च सहस्रशः ।
प्रययू राजवत् सर्वे धर्मपुत्रेण पूजिताः ।
ततः स सम्मतं राजा हित्वा सौवर्णमासनम् ॥ )
तं पद्भ्यामनुवव्राज धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान् वासुदेवं महाबलम् ॥ ६३ ॥
ततो मुहूर्तं संगृह्य स्यन्दनप्रवरं हरिः ।
अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ६४ ॥
अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशाम्पते ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥ ६५ ॥
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ।
कृत्वा परस्परेणैवं संविदं कृष्णपाण्डवौ ॥ ६६ ॥
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान् प्रति ।
गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप ॥ ६७ ॥
एको दुर्योधनो राजा शकुनिश्चापि सौबलः ।
तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ॥ ६८ ॥

इति श्रीमहाभारते सभापर्वणि शिशुपालवधपर्वणि शिशुपालवधे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## ( द्यूतपर्व )

# षट्चत्वारिंशोऽध्यायः

व्यासस्य भविष्यसूचकवचसा युधिष्ठिरस्य चिन्ता, सर्वत्र साम्येन वर्तितुं प्रतिश्रुतिश्च

*वैशम्पायन उवाच*

समाप्ते राजसूये तु क्रतुश्रेष्ठे सुदुर्लभे ।
शिष्यैः परिवृतो व्यासः पुरस्तात् समपद्यत ॥ १ ॥
सोऽभ्ययादासनात् तूर्णं भ्रातृभिः परिवारितः ।
पाद्येनासनदानेन पितामहमपूजयत् ॥ २ ॥
अथोपविश्य भगवान् काञ्चने परमासने ।
आस्यतामिति चोवाच धर्मराजं युधिष्ठिरम् ॥ ३ ॥
अथोपविष्टं राजानं भ्रातृभिः परिवारितम् ।
उवाच भगवान् व्यासस्तत्तद्वाक्यविशारदः ॥ ४ ॥
दिष्ट्या वर्धसि कौन्तेय साम्राज्यं प्राप्य दुर्लभम् ।
वर्धिताः कुरवः सर्वे त्वया कुरुकुलोद्वह ॥ ५ ॥
आपृच्छे त्वां गमिष्यामि पूजितोऽस्मि विशाम्पते ।
एवमुक्तः स कृष्णेन धर्मराजो युधिष्ठिरः ॥ ६ ॥
अभिवाद्योपसंगृह्य पितामहमथाब्रवीत् ।

*युधिष्ठिर उवाच*

संशयो द्विपदां श्रेष्ठ ममोत्पन्नः सुदुर्लभः ॥ ७ ॥
तस्य नान्योऽस्ति वक्ता वै त्वामृते द्विजपुङ्गव ।
उत्पातांस्त्रिविधान् प्राह नारदो भगवानृषिः ॥ ८ ॥
दिव्यांश्चैवान्तरिक्षांश्च पार्थिवांश्च पितामह ।
अपि चैद्यस्य पतनाच्छन्नमौत्पातिकं महत् ॥ ९ ॥

*वैशम्पायन उवाच*

राज्ञस्तु वचनं श्रुत्वा पराशरसुतः प्रभुः ।
कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत् ॥ १० ॥
त्रयोदश समा राजन्नुत्पातानां फलं महत् ।
सर्वक्षत्रविनाशाय भविष्यति विशाम्पते ॥ ११ ॥
त्वामेकं कारणं कृत्वा कालेन भरतर्षभ ।
समेतं पार्थिवं क्षत्रं क्षयं यास्यति भारत ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १२ ॥

